# X

अथ संपादितं तत्र यात्रास्थेन रुमण्वता ।
अशित्वोदारमाहारं यात्रायै गन्तुमारभे ॥ १ ॥
उपवृन्दारकैर्युक्तमास्थाय स्यन्दनं सुखम् ।
हंसैरिव शशाङ्काभैर्विमानं यादसां पतिः ॥ २ ॥
अखण्डशशिबिम्बाभं गोमुखश्छत्रमग्रहीत् ।
मृष्टहाटकदण्डं च चामरं मरुभूतिकः ॥ ३ ॥
रथाग्रावस्थितो रश्मीनालम्बत तपन्तकः ।
आततज्यधनुष्पाणिः पार्श्वं हरिशिखो ऽभवत् ॥ ४ ॥
आशितं मृदुघासानां शेषं स्नापितपायितम् ।
मन्दमन्दं च नः सैन्यं स्यन्दनं परितो ऽगमत् ॥ ५ ॥
एवंप्राये च वृत्तान्ते चामरं चलयन्मनाक् ।
दृष्ट्वा हरिशिखं वाक्यमवोचन्मरुभूतिकः ॥ ६ ॥
चरता मृगयाक्रीडामार्यपुत्रेण पापिकाम् ।
प्रदाय प्राणिनः प्राणान्धर्मः प्राप्तो महानिति ॥ ७ ॥
तेनोक्तं किमिहाश्चर्यमनुपासितसाधुना ।
श्रमव्यायामसारेण भाषितं धन्वयेदृशम् ॥ ८ ॥
भूमिमित्रहिरण्यानां मित्रमेवातिरिच्यते ।
तन्मूलत्वादितरयोस्तस्मान्मित्रमुपार्जितम् ॥ ९ ॥

1. A *finit avec* athasampāditaṃtatrayātrāsthenaru-; asitvā- B asito- *m;* gatum *m;* ārubhe *n.* — 2. vṛṃdāraketyuktam *nm.* — 4. rathā *sur* rasā B; pārçve *nm.* — 5. ghāṣānāṃ B[1]; sainya B sainye *nm.* — 6. manāka B. — 7. yāpikām.

1. Tatra : sur le bord de la rivière, à l'endroit indiqué au début du chapitre IX et où ils se sont rendus après la chasse.

4. Pārçvam : meilleur que pārçve de *nm:* Hariçikha «vient occuper le flanc»; ils ne sont pas encore en route.

5. Mṛdughāsānām : texte peu satisfaisant, qui donne difficilement un sens.

8. Marubhūtika juge des choses comme un garde du corps; sa culture est élémentaire : maniement d'armes et préceptes de morale théorique; il n'a aucun usage du monde (VII, 26; X, 124; XV, 55). Hariçikha, fils de Rumaṇvat et futur premier ministre, est nourri de nīti et se pique de connaître le monde (VII, 25; X, 124; XV, 53) : il juge en politique. Le terme sādhu implique bonne naissance, esprit et jugement droit; il répond à peu près à «honnête homme», au vieux sens français. Mais Hariçikha est ridicule parce que son expérience n'est pas à la hauteur de ses prétentions : il va tout simplement réciter une plate formule de nītiçāstra (9).



IMPRIMERIE NATIONALE.

तयोः संजल्पतोरेवमहं गोमुखमब्रुवम् ।
धर्मादीनां प्रधानं यत्तदाचष्टां भवानिति ॥ १० ॥
तेनोक्तं धर्ममिथार्थौ यतः कामप्रयोजनाः ।
प्राधान्यं तेन कामस्य कामश्चेच्छासुखात्मकः ॥ ११ ॥
पुलिने हि पदं दृष्ट्वा पूर्वमिच्छा प्रभोरभूत् ।
येनेदमिह विन्यस्तं तं पश्येयं कथं न्विति ॥ १२ ॥
तं च दृष्ट्वार्यपुत्रेण सुखमासादितं यतः ।
तन्न मित्रं न धर्मार्थौ किं तु कामो ऽयमर्जितः ॥ १३ ॥
अन्यो ऽप्यस्ति महाकामः स युष्माकं न गोचरः ।
यूयं हि सर्वकामिभ्यो बाह्या दारुमनुष्यकाः ॥ १४ ॥
निर्दिष्टाः कामशास्त्रज्ञैः पुरुषास्तु चतुर्विधाः ।
उत्तमा मध्यमा हीनाश्चतुर्थास्तु नकेचन ॥ १५ ॥
उत्तमो गोमुखस्तेषामर्यपुत्रस्तु मध्यमः ।
अधमान्कथयिष्यामि भवन्तस्तु नकेचन ॥ १६ ॥
ततः क्रोधादिहसेदमवोचमरुभूतिकः ।
अहो नागरकत्वं ते निष्पन्नमनुजीविनः ॥ १७ ॥
अपि बालबलीवर्द सत्यमेवासि गोमुखः ।
को नाम मानुषमुखः सन्नमुक्तमुदाहरेत् ॥ १८ ॥
उत्तमो गोमुखस्तेषामर्यपुत्रस्तु मध्यमः ।
प्रभोरधिकमात्मानमित्थं कः कथयेदिति ॥ १९ ॥
तेनोक्तं दृढमूढो ऽसि न किंचिदपि बुध्यसे ।
न हि प्रभुत्वमात्रेण भवत्युत्तमकामुकः ॥ २० ॥
यः काम्यते च कामी च स प्रधानमहं यथा ।
अकामी काम्यते यस्तु मध्यो ऽसावार्यपुत्रवत् ॥ २१ ॥
यस्तु कामयते कांचिदकामां सो ऽधमः स्मृतः ।
ते नकेचन भण्यन्ते ये न काम्या न कामिनः ॥ २२ ॥
इतीदं लक्षणं येषां तान्विजानीत कामिनः ।
नकेचन भवन्तस्तु येन निर्लक्षणा इति ॥ २३ ॥

10. prabhāvaṃ *nm.* — 13. kāmāyagarjitaḥ *nm.* — 14. gocara B; yūyaṃhisevakāçiṣyāvāhyā *nm.* — 15. madhyama B. — 16. gomu-steṣām *n* gomusteṣām *m.* — 18. udāhare *nm.* — 23. tāmvijānīta B nāstijānīta *nm;* bhavaṃtaste *nm;* yenarnilakṣaṇā B.

अथ चामरमुज्झित्वा स्फुटन्निव कुतूहलात् ।
अपृच्छल्लज्जितमुखं गोमुखं नवचूतिकाः ॥ २४ ॥
योषिन्मधुकरी यासावुपभोक्तुं व्यवस्यति ।
स्वामिनो यौवनमधु क्वासौ कथय तामिति ॥ २५ ॥
तेनोक्तमर्यपुत्राय ब्रवीमि यदि पृच्छति ।
न तुभ्यं स्वयमप्युक्तं न हि मन्त्राणि श्रूयते ॥ २६ ॥
अथ बद्धाञ्जलिः प्रह्वो मामोचन्नवचूतिकाः ।
पृच्छ्यतां स्थिरगर्वो ऽयं प्रसादः क्रियतामिति ॥ २७ ॥
इच्छतापि तदाख्यातुं लज्जां भावयता मया ।
अप्रत्याख्यातभाषितं त्वयेत्यनुमोदितम् ॥ २८ ॥
अथानन्दाश्रुतिमिरे नेत्रे संमृज्य गोमुखः ।
संकास्य मुग्धवक्त्रश्च आख्यानमकथयत्कथाम् ॥ २९ ॥
अथाहमर्यपुत्रेण यौवराज्ये विभूषिते ।
अभिवादयितुं देव्यौ नरेन्द्रान्तःपुरं गतः ॥ ३० ॥
तत्र चित्रं मया दृष्टमदृष्टं दिव्यमानुषैः ।
वर्णक्रमविमुक्ता यद्राज्यमस्येव भूपतेः ॥ ३१ ॥
पद्मावत्या च पृष्टो ऽहं किमसि स्मितमुख गोमुख ।
पश्यसीति ततो देवि पश्यामीत्यहमुक्तवान् ॥ ३२ ॥
किं पुनस्त्वयमित्युक्ते देव्यै कथितवानहम् ।
ऋद्धिं वः शिल्पिनां शिल्पं मकरन्दां च तामिति ॥ ३३ ॥
अथ देव्या विहस्योक्तं चेतस्यः खलु गोमुखः ।
अचेतस्यो हि पुरुषः कथमेवं वदेदिति ॥ ३४ ॥

25. yosā upabhoktuṃ *n* yāsā upa- *m*. — 27. prahvaḥsovocan *nm*; pṛcchatāṃsthiramevāyam. — 28. sāvayatā *n* māvayatā *m*; -khyāna *nm*. — 29. samsṛjya *nm*; saṃkākhyaḥ *nm*. — 32. asmina B; devi B*m*. — 33. puna B. — 34. cetasya; vadediditi B.

26. Na hi... : *Manu*, III, 168.

28 cd : sens : «tu peux parler puisque je ne t'interdis pas de parler». Il a trop honte pour lui dire franchement «parle».

29. Saṃkāsya : «ayant toussé (pour s'éclaircir la voix)»; kās- est nouveau avec sam-.

31. Divyamānuṣaiḥ : ce sont les Vidyādharas. Cf. *Essai sur Guṇāḍhya et la Bṛhatkathā*, p. 22.

Jeu de mots sur varṇakrama : «gamme des teintes» et «série des castes».

34. Cetasyaḥ : «qui a de l'esprit», cf. VII, 76, et X, 35, 37, 47, etc. (acetasya 34, 36, 47, etc., cetasyatā 53). Je ne crois pas que ce terme ait été très usuel. L'emploi en est voulu ici : il est destiné à piquer la curiosité de Gomukha qui le comprend assurément, mais qui, ne l'ayant jamais entendu, ne sait s'il faut le prendre en bonne ou en mauvaise part (cf. 35).

आसीच्च मम तच्छ्रुत्वा संदेहाध्यासितं मनः ।
चेतस्यः किं नु गुणवानाहो स्विद्दोषवानिति ॥ ३५ ॥
न च पृष्टा मया देवी ससंदेहे ऽपि चेतसि ।
मा स्म बुध्यत सा बालमचेतस्कं च मामिति ॥ ३६ ॥
अपृष्टः को नु कथयेच्चेतस्यमिति चिन्तयन् ।
संचरन्मन्दिरमहं निर्गतो राजवेश्मनः ॥ ३७ ॥
पश्यामि स्म रथं युक्तं चित्रचामरमण्डनैः ।
निरन्तरखुरन्यासैः पारसीकैस्तुरंगमैः ॥ ३८ ॥
रथस्य प्राजिता तस्य पुरुषो मां विनीतवत् ।
प्रतोदगर्भमाधाय मूर्धन्यञ्जलिमब्रवीत् ॥ ३९ ॥
भर्तृदारक विज्ञाप्यमस्मिन् राजकुले वयम् ।
कुलक्रमागता भृत्या रथवाहनजीविनः ॥ ४० ॥
सो ऽहमाज्ञापितो राज्ञा यथैते पृष्ठवाहिनः ।
अचिराद्भवता रथ्याः क्रियन्तां तुरगा इति ॥ ४१ ॥
मया चैते यथाशक्ति सान्त्वदान्तास्त्वरावता ।
न तु संभावयाम्येतान्कुशलैरपरीक्षितान् ॥ ४२ ॥
तदेवं रथमारुह्य परीक्ष्यन्ताममी त्वया ।
पदवाक्यप्रमाणार्थचतुरेणागमा इव ॥ ४३ ॥
इदमादि ततः श्रुत्वा लज्जामानमिताननः ।
उपचारो भवेदेष सत्यमेवेत्यचिन्तयम् ॥ ४४ ॥
लम्बकर्णमपापष्ठं विनीतं लम्बशाटकम् ।
कायस्थं समषीपात्रं लेखनीकर्णपूरकम् ॥ ४५ ॥
सो ऽब्रवीन्महति क्लेशे पातिताः प्रभुणा वयम् ।
सर्वथा धिगिमां क्षुद्रां श्ववृत्तिमनुजीविनः ॥ ४६ ॥

35. āçīc B; āhosiddoṣavān B[1] āhosiddhodyavān *nm.* — 38. maṇḍalaiḥ *nm;* pārasīkes B*n.* — 39. prājitānasya *nm.* — 41. yathaita *nm.* — 42. kuçalevaparīkṣitān B[1] kuçalaiva- B[2]*nm.* — 43. ena B; -pramānā- B; -ārthaṃ *nm.* — 45. masī. — 46. prabhavaṇā *n* prabhaṇā *m;* kṣudraṃ B.

37. Kathayec : kathay- signifie ici «expliquer (la valeur du terme cetasya)». C'est le sens propre de kathay- : «expliquer le comment» (cf. *pāli* atthakathā «explication sur la signification», dhammakathā «explication sur la loi»).

39. Prājitā : «le cocher»; prājitar est bien attesté dans les lexiques, mais non dans les textes, selon *P. W.*

41. Pṛṣṭhavāhinaḥ : un pṛṣṭhavāhin (= pṛṣṭhavāha) est un cheval de selle, un rathya est un carrossier.

पृथिव्यां सन्ति यावन्तश्चेतस्याः पुरुषोत्तमाः ।
अचेतस्याश्च कर्तव्यं तेषां लेख्यं मया किल ॥ ४७ ॥
न चैकमपि पश्यामि युक्तं चेतस्यलक्षणैः ।
अचेतस्यास्तु सकलां क्षोभयन्ति महीमिति ॥ ४८ ॥
पुस्तकद्वयहस्तेन तत्र चैकेन भाषितम् ।
प्रसारिताङ्गुलीकेन मामुद्दिश्य सकौतुकम् ॥ ४९ ॥
आगत्यार्याकृतिममुं निर्दाक्षिण्यं न पश्यसि ।
आजीवार्थचिकित्साकं चिकित्सकमिवाधनम् ॥ ५० ॥
अयं तावद्चेतस्यपुस्तकादौ निवेश्यताम् ।
य एवमनुनीतो ऽपि रथं नारोढुमिच्छति ॥ ५१ ॥
अप्रार्थितो ऽपि यः कश्चिदारोहति स लिख्यताम् ।
चेतस्यपुस्तकस्यादौ नमस्कारादनन्तरम् ॥ ५२ ॥
ततश्चेतस्यतालोभाद्रथमुत्प्लुत्य सत्वरः ।
मा स्थान्यः कश्चिदारोहेदित्यारोहमहं रथम् ॥ ५३ ॥
तेन वेगवता गच्छन्नपश्यं गजमग्रतः ।
सुखायमानं मधुरैरालापैः परिकर्मिणाम् ॥ ५४ ॥
हस्त्यारोहं रथारोहो विधार्य रथमुक्तवान् ।
अन्यतो नय मातङ्गं मा चेतस्यरथं रुधः ॥ ५५ ॥
तेनोक्तमन्यतो यातु चेतस्याध्यासितो रथः ।
विहन्तुमहमेतस्य नेच्छामिच्छामि दन्तिनः ॥ ५६ ॥
अप्रवृत्तमदस्यास्य मदः सान्त्वैः प्रवर्तते ।
इच्छायाश्चाविघातेन तेन नः क्षम्यतामिति ॥ ५७ ॥
अवोचमथ यन्तारं न नाम यदि नेच्छति ।
आधोरणः पथान्येन रथः प्रस्थाप्यतामिति ॥ ५८ ॥

47. kilaḥ B. — 49. bhāṣitām *nm;* aṅgulikena B, *corr.* B'. — 50. nirdākṣiṇyām *nm;* pasyasi B paçyati *nm;* 50 cd *om. m.* — 51. 51 ab *om. m.* — 53. tataḥçce- B. — 54. jagam B'. — 55. harmyāroham *nm*; ratha B. — 56. yātuṃcetasyodhyasito *nm;* icchāmikvāpidantinaḥ *nm.* — 58 *om. n;* āvocam *m;* nanāga *m;* nechasi; yathā- B.

49. -āṅgulīkena : à ne pas confondre avec aṅgulīka «bague». C'est ici aṅgulī- «doigt» + ka, suffixe de dérivation après deuxième terme de composé.

50. Cikitsakam : il s'agit d'un de ces médicastres besogneux qui du médecin n'ont que l'habit et qui courent les rues en quête de clients : ces charlatans sont stigmatisés dans le traité mis sous le nom de *Caraka* (I, 29, 5).

एवं यातेति चोक्ता सः परिवर्तितवान् रथम् ।
वेश्यावासमध्येन त्वां नयामीति चोक्तवान् ॥ ५९ ॥
आशीश्च मम दीर्घायुरयं भवतु कुञ्जरः ।
बध्नता येन मे मार्गं चेतका दर्शिता इति ॥ ६० ॥
पश्यामि सा च विस्तीर्णशिलातलधरातलम् ।
माल्यभूषणधूपादिप्रायपण्यं वणिक्पथम् ॥ ६१ ॥
तमतिक्रम्य रथ्याया हर्म्यमालाः सनिष्कुटाः ।
सशरीरा इव व्यक्ता वास्तुविद्याकृतां श्रियः ॥ ६२ ॥
उत्कटाकारचरिताः सन्नद्धाः प्रमदाः क्वचित् ।
तादृशानेव युवकान् सेवमानाः पराङ्मुखान् ॥ ६३ ॥
पृष्ठतो ऽनुनयन्तं च युवानं युवतिं क्वचित् ।
तया निर्भर्त्स्यमानं च वाक्यैर्मधुरदारुणैः ॥ ६४ ॥
अयि बल्लवकापेहि किं मां छुपसि दुर्भगान् ।
बल्लवबल्लवकच्छुप्तां छुप बल्लविकामिति ॥ ६५ ॥
चलयन्तीं क्वचित्कांचिद्विपञ्चीमङ्गुलाङ्कुशिताम् ।
कांचित्कोणपरामर्शशिञ्जानपरिवादिनीम् ॥ ६६ ॥
इति संचरमाणो ऽहं रथेन मृदुगामिना ।
पठन्तीः पट्टिका यथाः पश्यामि स्म कुमारिकाः ॥ ६७ ॥
कः पुनः श्लाघ्यं पन्थ इति श्रोतुं मयेच्छता ।
दूरात्प्रहितकर्णेन स्फुटमाकर्णितं यथा ॥ ६८ ॥

59. rathe *nm.* — 60. kuñjaraṃ B, *corr.* B[1]. — 61. prāṃyapaṇyaṃ B prāyapuṇyaṃ *nm;* vaṇikyathaṃ *nm.* — 62. namaṃtikramaramyāçrīharyamālāḥ *n* -ramyyaçrīrharyamālāḥ *m;* mālāssaniṣkuṭāḥ B; uyastāvyastavidyā *nm;* kṛtā *n.* — 63. sevyamānāḥ. — 64. nirbhatsyamānañ B. — 65. apis māṃ-yasi *nm;* ballavakachadmākūpaballavikāṃ *nm.* — 66. calayanto *nm;* koṇaparāmarṣa B kṣaṇaparāmarṣa *nm;* çaṃjāna *nm.*

59. Saḥ : traité à la fin d'un pāda impair de la même manière qu'à la fin d'un pāda pair.

61. Vaṇikpatham : non *la* place du marché mais *une* place de marché, celle qui se trouve à proximité du quartier des courtisanes et où l'on vend des objets à leur usage, fleurs, bijoux et parfums.

64. Madhuradāruṇaiḥ : des paroles dures qui étaient en même temps tendres (de ton).

65. Ballavaka : dérivé non encore attesté de ballava, avec nuance péjorative : «marmiton». Ballavikā : «fille de cuisine».

Chup- «toucher», relevé dans le *Dhātupāṭha*, non attesté dans les textes sanskrits mais existant en pāli : cf. *Dhammapada, Aṭṭhakathā*, p. 156 (Fausböll) : mā maṃ hatthena chupīti ca vutto naṃ acchupitvā. . . ; chupana, nom d'action, existe également.

समेत्य पूर्वं च स्वप्यात्सुप्तं च न परित्यजेत् ।
प्राणापानौ च यत्नेन वने संधारयेदिति ॥ ६९ ॥
आसीच्च मम या एता पितृशास्त्रमधीयते ।
मन्ये चारविनोदायैरहं येषां प्रवेशितः ॥ ७० ॥
कामदेवालयं यान्तः सुमन्तो ऽपि मदर्पितम् ।
अभाषत कृतार्थो ऽहं निद्रां प्राप्स्यामि संप्रति ॥ ७१ ॥
यो ऽसौ विनयगर्वेण दुःखमास्ते स गोमुखः ।
अवन्ध्यं यौवनं कर्तुमेष येषां विनाकृते ॥ ७२ ॥
अवोचमथ यन्तारमशोभनमनुष्ठितम् ।
अधुना तु रथः क्षिप्रं प्रतीपं नीयतामिति ॥ ७३ ॥
तेनोक्तं मा पक्वणैर्गाह्नेदं मातङ्गपक्षणम् ।
न च दुर्जनमार्गेण कश्चिद्भवति दोषवान् ॥ ७४ ॥
अतीतश्च महानध्वा शिष्यते स्तोकमन्तरम् ।
रथः किं पृष्ठतो यातु किं पुरः प्रेर्यतामिति ॥ ७५ ॥
मया तु पुर इत्युक्ते त्वरितः सारथी रथम् ।
प्रेरयत्तत्र चापश्यं मन्दिरं मन्दरोन्नतम् ॥ ७६ ॥
राजावरोधनाकारं छायाधाविततोरणम् ।
योषिद्दर्पवरप्रायं विनीतजनसंकुलम् ॥ ७७ ॥
तस्मात्कन्या विनिर्याय हारिहासादिभूषणाः ।
कान्तिबाधितपद्मिन्यः परिवार्य रथं स्थिताः ॥ ७८ ॥
तासामेकाब्रवीत्प्रौढा शिरोविरचिताञ्जलिः ।
भर्तृदारक विश्राम्यमागच्छत किलेति माम् ॥ ७९ ॥

69. svapyāta B. — 70. kāyenā *n* kāenā *m*. — 72. ryoso B[1]; sarveṇa B. — 73. asobhanam B adyomanam *n* açomanam *m*. — 74. pakvaṇām *nm*. — 75. mahā----masto- *n* mahā---masto- *m;* pṛṣṭhamāyātu *nm;* purā *nm*. — 76. prerayet *nm;* -āpasya B -āyasya *nm*. — 77. -rodhanācāram *n* -rodhanāvāram *m*. — 78. bhūṣaṇā. — 79. siro B; viracatā- B varavitām- *nm*.

74. Mātaṅgapakṣaṇam : cf. III, 11.

79. Kila : l'emploi de ce mot implique qu'elle est chargée d'une commission, qu'elle ne parle pas pour son propre compte (v. 80 et 81). Dans les textes sanskrits, kila sert souvent pour introduire une légende, un «on-dit», mais non pour marquer qu'on rapporte un message. C'est en pāli que cette dernière valeur, très particulière, se rencontre fréquemment (Childers, s. u. kila et kira); il faut l'admettre ici.

मम त्वासीदहो शक्तिर्वत पुरुषस्य कर्मणः ।
जगतः प्रभुरप्येषा येन प्रेष्येव भाषते ॥ ८० ॥
अचेतनैरलं पुंसः किलशब्दः प्रतीयताम् ।
यैः ज्ञाता परतन्त्रेयं लज्जीयेन च सूचिता ॥ ८१ ॥
किं तु यानि न यानीति संशयाने क्षणं मयि ।
दैन्यम्लानमुखाम्भोजास्ता निरैक्षन्त पृष्ठतः ॥ ८२ ॥
अनुयाता च तद्दृष्टिं दृष्टमुद्घाटितं मया ।
वातायनं कवाटस्थमणिजालांशुभासुरम् ॥ ८३ ॥
तेन शृङ्गारसंचारं तालवृन्तचयं चलत् ।
विभ्रान्तग्राहिणीपाणिकरप्रकरपिञ्जरम् ॥ ८४ ॥
तालवृन्तान्तरालीनं मुखमुन्नतकण्ठकाम् ।
सरस्तरंगरन्ध्रस्थमुन्नालमिव पङ्कजम् ॥ ८५ ॥
चञ्चत्प्रदेशिनीकं च पाणिमुच्चैः प्रसारितम् ।
सुकुमारमरुत्प्राप्तमिव विद्रुमपल्लवम् ॥ ८६ ॥
केयमाह्वयतीत्येतदविचार्यैव यानतः ।
भुवमागतमात्मानमाशु चेतितवानहम् ॥ ८७ ॥
उक्तः सारथिना चास्मि प्रणयं प्रणयीजनः ।
करोतु सफलं तेन भर्तृपुत्र प्रविश्यताम् ॥ ८८ ॥

80. çaktirvat B[1] çaktirvata B[2] çaktivata *nm;* praiṣyeva B*m* preṣyaiva *n.* — 81. yaikṛtā B; -tantreya B -tantraipa *n* -tantrepa *m.* — 82. yonitayānīti; saçayāne B saṃçayola *n* saçayola *m;* sukhāṃbhojās B; nirīksanta B nirīkṣyaṃtu *nm.* — 83. kavāṭasya *n* kavāṭasthe *m.* — 84. tena : kapāṭena *mss;* çvaṃgāra *nm;* vṛtta B. — 85. vṛttā- B. — 86. vañcat B; maruta B. — 87. avicāryeva B; pānataḥ *nm;* cetibhavān *nm.*

80. Prabhur : féminin qui ne soulève pas de difficulté mais qui mérite d'être remarqué.

Praiṣyeva bhāṣate : à cause de la formule vijñāpyam et du mot kila.

83. Kavāṭa : vantail d'une fenêtre. Il est difficile de dire s'il y a une nuance de sens entre kavāṭa et kapāṭa qui semble avoir été employé pour le gloser (v. 84). Cependant kavāṭa paraît désigner plus spécialement ici l'encadrement.

84. Au lieu de tena les manuscrits ont kapāṭena qui rend le vers faux (cf. 83).

86. Vidruma- : le sens usuel est «corail». On peut entendre : «(une branche) de corail», parce que la main est fardée de rose. Mais on peut entendre aussi : «(un rameau) sans l'arbre», «détaché de l'arbre». Ce sens est préférable à cause de -marutprāptam, mais le précédent est peut-être impliqué aussi.

87. Bhuvam etc. : cf. formule analogue, V, 136.

यावतीं च भवान्वेत्ताभिज्ञासे तावतीमहम् ।
धुर्यान्विश्रमयन्नासे आततोऽश्रमानिति ॥ ८९ ॥
गणिकाभिस्त्वहं ताभिरारण्यक इव द्विपः ।
वारीमिव दृढद्वारामाद्यां कक्ष्यां प्रवेशितः ॥ ९० ॥
प्रशस्तैरन्वितां तत्र प्रदेशैः पुष्करादिभिः ।
अधीयमानविनयामपश्यं नागकन्यकाम् ॥ ९१ ॥
द्वितीयायां तु कक्ष्यायां शिल्पिकौशलशंसिनी ।
कर्णीरथप्रवहणे शिबिकां च शिवाकृतिम् ॥ ९२ ॥
प्रशस्तलक्षणगणान् रणदाभरणस्रजः ।
नानादेशांस्तृतीयायां वाजिनः साधुवाहिनः ॥ ९३ ॥
चतुर्थ्यां विदवत्कोकचकोरशुकशारिकम् ।
शरावकुक्कुटव्रातं वयःपञ्जरमण्डलम् ॥ ९४ ॥
कलाविन्यासकुशलैर्नानाकाराणि शिल्पिभिः ।
सुवर्णतारताम्राणि कल्पितानि ततः परम् ॥ ९५ ॥
षष्ठ्यां तु योज्यमानानि गन्धशास्त्रविशारदैः ।
धूपानुलेपनस्नानवासनानि ततस्ततः ॥ ९६ ॥
सप्तम्यां रच्यमानानि रङ्गधूपनवासनैः ।
वासांसि पट्टकौशेयदुकूलप्रभृतीनि तु ॥ ९७ ॥
अष्टम्यां मणिमुक्तस्य प्रकीर्णबहलत्विषः ।
संस्कारान्दृष्टवानस्मि निशानव्यधनादिकान् ॥ ९८ ॥

89. puryāṃ *n* puryā *m.* — 91. ādhīya-; praçastairacitāṃtatrapraçastaiḥpuṣ*nm;* kanyāṃ B[1] kanyakāḥ B[2]. — 92. çaṃsinīm. — 93. sādhuvāhinaḥ B; -deçānatṛtīyāyāṃ B -deçān tṛ- *nm.* — 94. -vrāta; -mayaḥ- B[1]; -saṃjara- *nm.* — 96. visāradaiḥ B visāradai *m.* — 97. vāsāṃçi B. — 98. bahalanviṣaḥ B[1]; niçāta B nikhāta *nm.*

90 et suivants. Cette description est à rapprocher de celle de la maison de Vasantasenā, acte IV de la *Mṛcchakaṭikā.*

92. Karṇīratha : karṇīrathaḥ strīyogyo 'lparathaḥ *Mallinātha* ad *Raghuvaṃça*, XIV, 13.

96. Le travail exécuté dans chaque salle est différent et c'est la septième qui est réservée aux vêtements; dans la sixième il semble qu'on parfume les étoffes; le sens est douteux.

97. Il n'est pas impossible qu'il faille voir dans raṅgadhūpanavāsanaiḥ le pendant de gandhaçāstraviçāradaiḥ. Ce seraient des ouvriers sachant teindre et parfumer par fumigation. Mais, en ce cas, on n'attendrait pas un dernier terme tel que vāsana.

98. Niçānavyadhana- : le premier de ces termes désigne la taille du diamant (maṇi) ou plutôt seulement le fait d'en aviver les pointes (cf. Finot, *Lapidaires indiens*, XXX-XXXI); le second, le forage des perles (muktā).

अष्टस्वपि च शालासु महामात्रादयश्चिरम् ।
सर्वोद्यमानि संचन्तो विश्रान्तिं या गतिं मम ॥ ९९ ॥
आगत्यागत्य ताः कन्याः कामाक्षमपि भूषयाः ।
अशृण्वन्कारणीमूल्यादमन्तो मूढपुंगवाः ॥ १०० ॥
अयं केनापि कार्येण प्रविशन् गर्भहारकः ।
दुर्भगैर्धार्यते यस्माच्छिल्पकर्मिभिरिति ॥ १०१ ॥
हेमकुम्भध्वजाश्लिष्टः पाण्डुराम्बरमूर्धजाः ।
प्रयुक्तरत्नपुष्पार्घमजोषयामास स्त्रियः ॥ १०२ ॥
दीर्घायुषा गृहमिदं चिन्तामणिसधर्मणा ।
अलंकृतं च गुप्तं च गमितं च चिरन्तनात् ॥ १०३ ॥
ततः संगत्य चेतस्यैश्चेतस्यामानवीर्गिव ।
गुणिसङ्गनिमित्ता हि गुणा गुणवतामिति ॥ १०४ ॥
सूर्यकान्तशिलाकान्तिनिरस्ततिमिरं ततः ।
कन्याकूपपरीवारः प्राप्तः सोपानपङ्क्तिम् ॥ १०५ ॥
तया प्रासादमारुह्य पापप्रसक्तिवर्जिते ।
प्रसुप्त इव संसारे शिवे दृष्टिं न्यवेशयत् ॥ १०६ ॥
कलाभिरथ विद्याभिर्बुद्धिं सर्वविदामिव ।
अप्रमेयगुणाधारां कन्यां कन्याभिरावृताम् ॥ १०७ ॥
अनुमानोपमानाभ्यां शब्दौ तावुपासताम् ।
प्रत्यक्षेणापि तद्रूपं दुर्निरूप्यं निरूपकैः ॥ १०८ ॥
चक्षुर्निरीक्ष्य तस्यां हि मूर्छामुपितचेतनः ।
पाषाणपुत्रिकाकारः प्रत्यक्षेण निमीक्ष्यते ॥ १०९ ॥

101. -durbhagam *nm.* — 103. alakṛtañ B. — 104. tatasaṅ- B; caitasyaiç B. — 107. guṇādhārāṃ *nm;* kanyāṃkanyāṃkanyābhir B. — 108. çabdoḥ B[1] çabdauḥ B[2] çabdā *m;* tāvupā- B*m* tāṃvupā- *n.* — 109. īkṣyate.

99. **Mahāmātrādayaç** : «les grands personnages (de chaque atelier), etc.», «les maîtres d'œuvre et leurs compagnons».

100. **Kāraṇīmūlyād** : «par suite du prix que reçoit un chef ouvrier» (?). Très douteux; j'interprète kāra (mieux vaudrait kāru) + ṇī, comme grāmaṇī. On pourrait aussi songer à kāraṇīr mūlyād «au salaire on reconnait le chef ouvrier»..

104. Cetasyaiç : cf. 34.

108 Nirūpakaiḥ : ceux qui savent définir, décrire exactement.

109. Je ne crois pas qu'on puisse respecter la leçon īkṣyate, à moins de couper la phrase devant pratyakṣeṇa, ce qui serait dur. D'ailleurs, la confusion de kṣya et de kṣa est si fréquente que īkṣate est à peine une correction.

कुमारीति ततः किंचिदुल्लाप्यास्फुटरेफकम् ।
तूष्णींभूता परां तुष्टिं नासाग्रे निश्चलामधात् ॥ १२० ॥
पृष्टे हरिशिखादीनां क्रमेण कुशले तया ।
मया कुशलमित्युक्ते मामपृच्छदसौ पुनः ॥ १२१ ॥
आनाय्येव यथा युक्तिः सर्वैः सर्वा सुखेहिता ।
प्रकर्षो यस्य यस्यां वो विद्यां कथय तामिति ॥ १२२ ॥
मयोक्तमर्थपुत्रस्य प्रावीण्यं गजनीतिषु ।
मानुषैरविगाह्ये च गान्धर्वज्ञानसागरे ॥ १२३ ॥
दण्डनीतौ हरिशिखः शास्त्रेषु मरुभूतिकः ।
रथादियानविद्यासु निष्ठायातस्तपन्तकः ॥ १२४ ॥
मया तु करभेणैव शमीनामग्रपल्लवाः ।
गृहीताः सर्वविद्यानामेकदेशा मनीषिताः ॥ १२५ ॥
साब्रवीदथ विद्यानामासामासेवनस्य कः ।
भवतामुचितः कालः कतमद्वा विनोदनम् ॥ १२६ ॥
मयोदितं त्रियामान्ते प्रबुद्धाः स्तुतदेवताः ।
मङ्गलालंकृताः पश्चादितिहासमधीमहे ॥ १२७ ॥
अनुज्ञातास्ततो वैद्यैः सुगन्धिस्नेहधारिणः ।
अभ्यस्यामः सयानानि नियुद्धान्यायुधानि च ॥ १२८ ॥
ततः स्नात्वा च भुक्त्वा च मुहूर्तं यापितश्रमाः ।
अर्थशास्त्राणि शंसन्तो महाकाव्यानि चास्महे ॥ १२९ ॥
निशामुखे ततः सौधे सान्द्रचन्द्रप्रभाजिति ।
रमामहे सुखं कान्तैर्वेणुतन्त्रीरुतैरिति ॥ १३० ॥
अथ सा नयनान्तेन श्रवणान्तविसारिणा ।
बालिकामन्तिकासीनां दृष्ट्वापश्यन्मदन्तिकम् ॥ १३१ ॥

120. kṣaṇa B; -āgra *nm.* — 121. pṛṣthe B*m;* kramena B; trayā B'*nm.* — 123. sānuṣair B. — 124. -yāntas B*n* -yāttas *m.* — 125. karabheṇaiva; samīnām. — 129. tata B; sūstrāṇi B; ṣaçyanto (ṣa *mal formé, peut-être* pa) B paçyanto *nm.* — 130. prabhātiti *m;* taṃtrairu- *n* taṃtroru- *m.* — 131. viçāriṇā; cālikāṃtikā- *n* cālikāmaṃtikā- *m.*

120. Kumār : elle ne termine pas le mot kumāra dont la fin se perd dans le bredouillement d'un r.

Ullāpya : ul-lap- (causal), ici «émettre un son»; le sens ordinaire est «baiser».

123. Le prince a les mêmes talents que son père Udayana.

Mānuṣair avigāhye : cette expression est pleine de sens puisque Naravāhanadatta sait jouer du luth dans le mode gāndhāra qui est l'apanage des dieux (voir XVII).

ततः छत्रादिवोत्थाय नितम्बभरमन्थरम् ।
मयासन्ने निविष्टा सा मनागपि न वाचिता ॥ १३२ ॥
एवमन्यापि गणिका तृणवद्गणिता मया ।
यदापरा तदायाता रूपिणी रूपदेवता ॥ १३३ ॥
साब्रवीत्कष्टमायातमितो गुरु गुरोर्वचः ।
इतश्चातिथिसत्कारः किमत्र क्रियतामिति ॥ १३४ ॥
मयोक्तं देवताभ्यो ऽपि गुरवो गुरवो यतः ।
तस्माद्गुरुर्गुरोराज्ञा सैव संपाद्यतामिति ॥ १३५ ॥
साब्रवीन्न त्वयोत्कण्ठा कार्या मिथ्याल्पप्रज्ञता ।
करिष्यति निरुत्कण्ठमियं त्वां पद्मदेविका ॥ १३६ ॥
ममाभिप्रायमूहित्वा लज्जमानेव साब्रवीत् ।
न युक्तमननुज्ञातैः प्रेष्यैरासन्नमासितुम् ॥ १३७ ॥
इदं त्वास्तीर्णपर्यङ्कं शरणं भर्तृदारकः ।
प्रविश्य रतसंक्षोभखेदं विनयतामिति ॥ १३८ ॥
तत्प्रविश्य तदादेशाद्विकसद्रमणीयकम् ।
शयनं हेमरत्नाङ्गं सापाश्रयमपाश्रयम् ॥ १३९ ॥
पादस्थाने ततः स्थित्वा साब्रवीत्कः करोतु वः ।
मन्दपुण्यैरसंभाव्यां पादसंवाहनामिति ॥ १४० ॥
पादसंवाहनं कार्यं भद्रं स्थायेन केनचित् ।
संवाहकविशेषेण किमत्रेति मयोदितम् ॥ १४१ ॥

132. nitasva B; ayi B; vīkṣitā B. — 133. rūpinī B. — 134. vaca *Bm.* — 135. devatānyo *nm.* — 138. paryaṅkagṛhaṃçaraṇaṃ B[1]. — 139. tatvaviçya *nm;* -ādeçāvikadāma-ṇīyakaṃ *n* -ādeçāvikadāmaṇīyakaṃ *m.* — 141. bhadrasyayena.

134. Sā : la troisième gaṇikā.

Guror : au masculin, bien qu'il s'agisse ici de sa maîtresse, parce que la formule est générale. Cf. 135.

Ito... itaḥ... : elle a compris que Gomukha est choqué de la liberté que prennent ces filles de venir s'asseoir près de lui; cela est contraire aux égards dus à un hôte de son rang (atithisatkāraḥ); et cependant tel est l'ordre donné par leur maîtresse.

136. Sā : la maîtresse.

137. Sā : Padmadevikā.

Preṣyair : au masculin parce que la formule est générale.

139. -ratnāṅga- : «corail», mot de lexique.

140. -saṃvāhanām : «massage». *P.W.* donne le mot seulement comme neutre.

141. Il est impossible de conserver bhadrasya, leçon des mss., qui rend le vers faux.

तया त्वावर्जिते पात्रे पाणिभ्याममलप्लवम् ।
निर्दोषे मयि दीनेयं प्रभुता पिशिताशया ॥ १४२ ॥
करणान्यस्तकर्माणि न जाने कीदृशं मनः ।
विचेष्टानि च मे ऽङ्गानि चित्रार्पितामिमामिति ॥ १४३ ॥
सा तु संवाह्य चरणौ गुणानिद्यमनपोल् ।
कथं न्वायजनो वक्षः श्रान्तं कः सेवतामिति ॥ १४४ ॥
मम त्वासीत्प्रणम्येयमनाचारा च या मम ।
स्पृष्टपादस्ततो ह्यस्याः पुरस्ताधातुनिष्पतति ॥ १४५ ॥
ममानिच्छायमूढत्वा सामग्रीदर्शितक्रिया ।
उरः स्पृशति कः को वा करास्यां मृदुनोरिति ॥ १४६ ॥
आसीच्च मम काप्येषा देवता प्रतिवादिनी ।
परचित्तज्ञता यस्मात्सापि रात्र्यन्तरमिति ॥ १४७ ॥
तयोर्मां रससंयोगजातखेदस्य चेतसः ।
स्तनोत्पीडितकं नाम संवाहनमभीप्सितम् ॥ १४८ ॥
यदि चाहमनुज्ञाता यतो वा प्रवदाम्यहम् ।
ततो मामनुजानीत भर्तृत्वाद्धि योषितः ॥ १४९ ॥
आसीच्च मम धैर्येण गिरश्चावसृता च या ।
अनुज्ञां लभते यावत्तावद्दासी निराकुला ॥ १५० ॥
अथैनामब्रुवं वाचे परायत्तं निबोध माम् ।
यः संवाहनशास्त्रज्ञः स स्वतन्त्रः प्रवर्तताम् ॥ १५१ ॥
उरसा स्तनसारेण सा मदीयमुरस्ततः ।
संवाहयितुमारब्धा सकम्पेन सवेपथु ॥ १५२ ॥
सर्वथालं विवर्धन्त्या प्रसन्नकपचानया ।
संक्षिप्तवस्तु रम्ये ऽर्थे न कदाचिद्विरज्यते ॥ १५३ ॥
ततः क्रीडागृहात्तस्माद् बाह्यां तामेव वीथिकाम् ।
उपागच्छं मुहूर्ताच्च तामेवार्यसुतागता ॥ १५४ ॥

142. nirdoṣamapi *nm.* — 143. -tantrāni B. — 144. vakṣuḥ *nm;* vasyevatām B. — 146. spṛtiçati B¹. — 147. jñātā. — 151. nibodhasām B; svatantram B. — 152. saveyathu B sacepathu *nm.* — 153. vasturamyaighām B vasturarmyerthe *m.* — 154. bāhyamtam *nm;* tamivāyyasutāhgatā *n* tamivārya- *m.*

**145.** Anācārā : mot connu comme substantif, nouveau comme adjectif.

154. Āryasutā (et aryasutā) : «la demoiselle», comme āryaduhitar (*cf.* 160, etc.). Ce mot désigne la maîtresse du lieu, Madanamañjukā.

वन्दित्वा प्रस्थितं सा मां वक्रमालोक्य विस्मिता।
आलपन्मधुरालापा स्मितप्रच्छादितारतिः ॥ १५५ ॥
इदं भवनमात्मीयं प्रत्यवेक्ष्यं सदा त्वया।
रक्ष्यमाणो भुजंगो ऽपि कालेन परिचीयते ॥ १५६ ॥
अथ वस्त्रान्तमालम्ब्य मदीयं पद्मदेविका।
विज्ञाप्यमस्ति मे किंचित्तच्च नाथेत्यभाषत ॥ १५७ ॥
ततो हृदयवासिन्या पद्मदेविकया सह।
तमेव रथमारुह्य कुमारागारमागमम् ॥ १५८ ॥
तत्र युष्मानभुञ्जानान्पश्यामि च मया विना।
उपहासं च कुर्वन्तं तं तथा मरुभूतिकम् ॥ १५९ ॥
दिने ऽन्यत्र च सेवित्वा यथा युष्मानहं पुनः।
गत्वार्यदुहितुर्मूलमासेवे पद्मदेविकाम् ॥ १६० ॥
उक्तश्चार्यदुहित्राहमधीराः सुहृदस्तव।
वृत्तान्तो ऽयमतस्तेषां मा गमत्कर्णगोचरम् ॥ १६१ ॥
ततः प्रतिष्ठमानं मामवोचत्पद्मदेविका।
तद्वः किं विस्मृतं कार्यमिति नेति मयोदितम् ॥ १६२ ॥
तयोक्तं कथयिष्यामि पुनरभ्यागताय ते।
धत्ते संभ्रियमाणं हि रहस्यं रक्ष्यतामिति ॥ १६३ ॥
अथापरस्मिन्दिवसे गत्वार्यदुहितुर्गृहम्।
शोकमूकप्रवृत्ताश्रमपश्यमवसाजनम् ॥ १६४ ॥
पर्यस्यावृतमुखी शय्ये तथा पराङ्मुखी।
मन्दशब्दं मया दृष्टा क्रन्दन्ती पद्मदेविका ॥ १६५ ॥

155. mā B; ālapana B. — 156. pratyavekṣaṃ *nm.* — 157. abhāṣat B. — 159. yusmān B; yayāvitā *nm.* — 160. yusmān B; gandhā B[1]; -āyeduhitur *nm.* — 161. vṛttāṃtāyagatas *nm;* teṣāmāgamat. — 162. praviṣṭamānaṃ *n* pratiṣṭamānaṃ *m;* padmadevikāṃ *nm;* itimatimayoditaṃ B itimetimayoditāṃ *n* -yoditā *m.* — 163. yatte *nm;* saṃvriyamānaṃ B*n* saṃpriyamānaṃ *m.* — 164. soka B; -āçram B*m* -āçcam *n.* — 165. dṛṣṭā *om.* B[1] *add.* B[n] dṛṣṭvā *n.*

155. Vismitā : elle est stupéfaite parce qu'elle s'attendait à ce que Gomukha lui parlât de la confidence qu'il devait recevoir de Padmadevikā.

156. Bhujaṃgo : il doit y avoir un jeu de mots implicite, bhujaṃga (serpent) pouvant aussi signifier «un galant».

161. La recommandation de la demoiselle est insidieuse : elle veut voir si Padmadevikā a fait la commission dont elle est chargée.

159. Voir VII, 34 et suivants.

162. Si cette conversation a lieu devant Madanamañjukā, comme je le pense, Padmadevikā s'exprime de manière à lui donner le change.

तामपृच्छं महाराज्ये वत्सराजे सुराजनि ।
अङ्गमस्य कुतः शोको युवराजे च राजति ॥ १६६ ॥
न किंचिदपि सावोचन्मया पृष्टासकृद्यदा ।
तदा किल विषण्णो ऽहं मुमोह च पपात च ॥ १६७ ॥
तत्र चैका प्रमृज्यास्रं मामवोचत्सचेतनम् ।
त्वन्नाथाश्लाघनीयेयमशोच्या पद्मदेविका ॥ १६८ ॥
अस्यास्तु स्वामिनीं पश्य युवराजे विराजति ।
यस्याः शोकोपतप्ताया यतो रक्षतो भयम् ॥ १६९ ॥
अथ वा पश्य तामेव पश्यतामेव पीड्यते ।
त्वादृशां सुहृदां यस्याः समदुःखसजीवनम् ॥ १७० ॥
तदावेदितमार्गेण गत्वा प्रमदकाननम् ।
दृष्टा कमलिनीकूले तत्रार्यदुहिता मया ॥ १७१ ॥
मृणालशैवलाम्भोजनलिनीदलसंस्तरम् ।
शोषयन्ती सनिश्वासैर्मुहुर्विपरिवर्तनैः ॥ १७२ ॥
मुद्रिकालतिका नाम दारिका हारिका दृशः ।
तदङ्कन्यस्तचरणा ध्यायन्ती पुरुषोत्तमम् ॥ १७३ ॥

166. vatsaje *nm.* — 167. pṛṣṭāmakṛd *nm.* — 169. paśya B yasya *nm;* virājani *nm;* tato'bhayaṃ B. — 170. suhṛdaṃ B¹; -jīvinaṃ B¹. — 171. mārgena B; dṛṣṭvā *m.* — 172. saivalā-; saṃstarāṃ *n;* svaniçvāsair *nm;* muhuvi- B.

168. Entendre açlāghanīyā, «cette infâme *Padmadevikā*».

170. Paçyatām ... suhṛdām : génitif absolu.

173. La pose est celle de Viṣṇu, les pieds dans le giron de Lakṣmī, qui les lui masse. Dhyāyantī puruṣottamam signifie à la fois «pensant à son amant» et «pensant à Viṣṇu»; hārikā «ravisseuse (dṛçaḥ, du regard)» veut dire aussi, conformément à *Pāṇini*, V, 3, 108, «semblable à Hari», et il est probable que ce second sens est impliqué. Pour le surplus, l'interprétation de ce vers est peu sûre; dans le doute il vaut mieux s'abstenir de toute correction, bien qu'il soit tentant de lire -dṛçā au lieu de dṛçaḥ. Parmi les diverses manières d'analyser la phrase, j'en retiens deux : 1° Prendre franchement Mudrikālatikā comme sujet : «(je vis) une donzelle nommée M., qui... ayant les pieds de la demoiselle posés dans son giron, pensait à Viṣṇu». La difficulté viendra de tad- : ce terme, ne pouvant s'interpréter comme sva-, représentera nécessairement āryaduhitā; dès lors il faut le faire porter sur caraṇa et non sur aṅka, mode de composition très suspect. 2° Faire des deux premiers pādas une incise : «(je vis) M., ravisseuse du regard, *et*, les pieds posés dans le giron de celle-ci, la demoiselle, etc.». Dhyāyantī se rapportera à āryaduhitā. Cette dernière hypothèse est encore la moins ruineuse. — Quant à faire d'āryasutā le sujet de toute la phrase, cela est impossible sans correction.

अथोपगम्य संभ्रान्तस्तां कृताञ्जलिरब्रवम् ।
देवी दुःखाङ्कदानेन संभावयतु मामिति ॥ १७४ ॥
साब्रवीद्दलमाकर्ण्य प्रवृद्धसुखभागिनः ।
तथा ममाप्रतीकारां लज्जाशोककरीं कथाम् ॥ १७५ ॥
को हि नन्दनसंचारिकामिनीजनकामुकः ।
तरत्यकरगम्भीरां विशेषेतरणीमिति ॥ १७६ ॥
ततः प्रसादयन्ती तां मुद्रिकालतिकाब्रवीत् ।
भर्तृदारिकया कश्चित्प्रार्थ्यते न विमानितः ॥ १७७ ॥
यदि च स्वयमाख्यातुमशक्ता भर्तृदारिका ।
ततो मामनुजानातु धृष्टो हि गणिकाजनः ॥ १७८ ॥
एवमुक्ताब्रवीदेयमेवं नाम निगद्यताम् ।
अकृत्वा साहसं कैर्वा महाँल्लब्धो मनोरथः ॥ १७९ ॥
न चेमं गोमुखादन्यः श्रोतुमालापमर्हति ।
भेदसंधानदक्षो हि दूतः कार्ये नियुज्यते ॥ १८० ॥
अथोत्सार्य ततो देशान्मुद्रिकालतिका कथाम् ।
मह्यमाख्यातुमारब्धा यथा धीयतां मनः ॥ १८१ ॥
भरतो नाम राजासीत्त्रिवर्गात्मपरायणः ।
स समाहृतवान्कान्ताः कुमारीरा महोदधेः ॥ १८२ ॥
युगपत्परिणीयाहमेताः सर्वा रहोगताः ।
सुखान्यनुभविष्यामि संततानीत्यचिन्तयत् ॥ १८३ ॥
यस्याश्च प्रथमं तेन गृहीतः कम्पनः करः ।
तस्यामेव स संतुष्टः शुद्धपुण्यार्जिताहतौ ॥ १८४ ॥
परिशेषास्तु यास्तासां मनोनयनहारिणः ।
मनोरुहकराकारानष्टौ प्राकल्पयद्गणान् ॥ १८५ ॥

174. abruvam *nm;* devi *nm;* sambhāvayitu B[1]*nm.* — 175. -mukha- B; tathamāmapratī- B[1] tathāmāmapratī- *nm;* tathām *nm.* — 176. tarat B. — 178. prṣṭo *nm.* — 179. uktvā *nm;* nivedyatām B; mahānlabdho B mahā-bdho *n* mahābdho *m.* — 180. samndhāna B. — 183. pariṇīyāhimetāsarvā; rahosatāḥ B[1]; acintyayan B acimtayan *nm.* — 184. kampanakaraḥ B[1] rupana- *n* kapana- *m.*

185. Manoruha = manoja «amour». Mais on pourrait tenter aussi une interprétation plus et sans doute trop subtile, que je me borne à indiquer : huit groupes faisant pendant aux huit (qualités) qui causent ce qui se produit dans l'esprit = la pensée et les sentiments (manoruha). Huit groupes (gaṇa) comme huit qualités (guṇa); ils reçoivent l'épithète de manonayanahārin pour faire pendant à manoruhakara (le



IMPRIMERIE NATIONALE.

गणे गणे च प्रमुखां मुखराभरणावृताम् ।
अनुज्ञातासनच्छत्रचामरामकरोन्नृपः ॥ १८६ ॥
ता गणान्तर्गता यस्मादन्यासां च महत्तमाः ।
तं महागणिकाशब्दमलभन्त नराधिपात् ॥ १८७ ॥
महागुणास्ततस्त्वन्यास्ततो ऽप्यन्यास्ततः पराः ।
यावद्घटकसंघट्टकठोरकटयः खलाः ॥ १८८ ॥
य एष गणिकाभेद इदानीमपि दृश्यते ।
ततः कालात्प्रभृत्येव भरतेन प्रवर्तितः ॥ १८९ ॥
गणमुख्यासु तासामेतासां किल संततौ ।
जाता कलिङ्गसेनेयं सरस्यामिव पद्मिनी ॥ १९० ॥
सुरासुरोरगस्त्रीणां निघ्नती रूपसंपदम् ।
अनया तनया लब्धा सेयं मदनमञ्जुका ॥ १९१ ॥
एषा राजकुलं यान्तीं दृष्ट्वा मातरमेकदा ।
अहमप्याचि यामीति पुनः पुनरभाषत ॥ १९२ ॥
ज्ञात्वा तु दृढनिर्बन्धां साची दुहितरं प्रियाम् ।
गृहीतबालाभरणामनयन्नृपसंसदम् ॥ १९३ ॥
अथ राजकुलादेषा निवृत्ता लपिता मया ।
खचिकाखैः क्षतोपेव कपोलनयनाधरैः ॥ १९४ ॥

186. chatra; akaronr̥paḥ. — 187. tān gaṇān (gaṇyān *m*) harṣatoyasmādasāsāṃcamahattamāḥ *nm;* gaṇikān samalabhatanarādhipān *n* gaṇikāçama- *m.* — 188. kaṭora *nm;* çalāḥ B[1]. — 189. eṣaṇagaṇikā B[1]. — 190. tāṣām B; samtanau *nm.* — 191. madanamañju-‖ *n* -mañju·· ‖ *m.* — 192. apyā-yāmī- *nm.* — 193. sā 'cī B socī *nm;* sampadam *nm.* — 194. -ādharaḥ *nm.*

terme -kara est de la langue usuelle; l'auteur évite à dessein karaṇa et kāraṇa qui ont un sens technique). Ce serait du nyāya tout pur : les huit qualités en question sont buddhi, sukha, duḥkha, icchā, dveṣa, prayatna, dharma, adharma; ce sont les qualités distinctives de l'âme (ātman); elles sont des causes; ainsi la buddhi est ce qui fait que les hommes se comprennent entre eux, etc.

188. Ghaṭakasaṃghaṭṭakaṭhorakaṭayaḥ : les mégères aux hanches durcies par le contact des cruches sont les porteuses d'eau. La hiérarchie des courtisanes mentionnée ici est celle qu'on retrouve dans le *Kāmasūtra* (VI, 6) : la gaṇikā est au premier rang, la kumbhadāsī au dernier.

192. Āci : cf. 193. C'est probablement ce mot qu'il faut reconnaître dans le passage difficultueux VII, 18 (voir aux *Additions et corrections*). On ne peut guère chercher ici et dans le passage cité qu'une forme d'un mot āñc-, āc- (ā + añc-, ac-), d'ailleurs hypothétique.

193. Ācī : cf. 192. Ce serait ici le nominatif du féminin.

स्थिता संप्रस्थितासीना निषीदन्ती च संतता ।
करोति स्म सखीमध्ये राजास्थानगताः कथाः ॥ १९५ ॥
दिनशेषमतिप्रेर्यं यामार्धं च सजागरा ।
प्रातः सादरमादत्त चित्रं मण्डनमात्मनः ॥ १९६ ॥
प्रस्थिता प्रस्थितां दृष्ट्वा राजास्थानाय मातरम् ।
तया पृष्टा क्व यासीति यत्र त्वमिति चाब्रवीत् ॥ १९७ ॥
तयोक्तमननुज्ञातैः पुत्रि गन्तुं न लभ्यते ।
राजास्थानं तनुलेहाः परुषा हि नराधिपाः ॥ १९८ ॥
तेन मातर्निवर्तस्व लब्धानुज्ञा गमिष्यसि ।
धृष्टा हि द्वेष्यतां यान्ति प्रणयिन्यो ऽपि योषितः ॥ १९९ ॥
मधुराश्चोपपन्नाश्च श्रुत्वा मातुरिमा गिरः ।
कटुका दुर्घटाश्चेयं मन्यमाना न्यवर्तत ॥ २०० ॥
दृष्टनष्टनिधानेव दरिद्रवणिगङ्गना ।
भुक्तनिद्रासनालापा शय्यैकशरणाभवत् ॥ २०१ ॥
एकदा प्रस्तुतकथाः सखीरियमभाषत ।
स्वप्तुमिच्छाम्यहं सख्यस्तावन्निर्गम्यतामिति ॥ २०२ ॥
यातासु तासु मनसा यत्सत्यं मम शङ्कितम् ।
एताः प्रस्थापिताः सख्यः किमकारणमेतया ॥ २०३ ॥
या सखीभिर्विना निद्रां नैव लब्धवती पुरा ।
तस्यास्ता एव निघ्नन्ति निद्रामिति न बध्यते ॥ २०४ ॥
चिन्तयित्वेति तिष्ठन्ती जालवातायनावृता ।
मण्डनव्यापृतामेतां पश्यामि स्म सदर्पणा ॥ २०५ ॥

195. saṃtatā *nm;* rājasthāna. — 196. atiprerya B: abhiprekṣya *nm;* sajāgarāḥ B[1]*nm;* | ..sādaram B (*trou*); ādatte B[2]; cittraṃ *ex* °cittaṃ B. — 197. rājasthānāya *nm;* pṛṣṭotka *n* pṛṣṭotkva *m.* — 198. putriga.tunnalabhya. (*trou*) | B putri------ | *n* putri······ | *m;* ta---puruṣāhinarādhimāḥ *n* ta····puruṣāhīnarādhimā *m.* — 199. mātanirvarttasva B; bhaviṣyasi *nm;* ·pṛṣṭho *n* pṛṣṭo *m;* dveṣatāṃ B dviṣatāṃ *nm.* — 200. giriḥ B[1]; -ceyaṃ gatāgatā *nm;* nyavarttataḥ B[1]*m.* — 201. aṅgaṇā B; -āsanā- B -āçalā- *n* -āçatā- *m.* — 202. kathāṃ *nm;* abhāṣataḥ B[1]. — 203. satsatyaṃ *nm;* saṅkitaṃ B. — 204. itinubudhyate. — 205. niṣṭhantī B: maṇḍalavyāvṛtām *n* -vyāghṛtām *m.*

205. Sadarpaṇā : (je la vis) à l'aide d'un miroir, dans un miroir. Il est tentant de corriger sadarpaṇām (je la vis occupée à sa toilette) un miroir à la main.

अभिराजकुलं स्थित्वा बद्धाञ्जलिरभाषत ।
जन्मान्तरे ऽपि भूयासमहं तस्मिन्वधूरिति ॥ २०६ ॥
दुकूलपाशमासज्य कंधरायामनन्तरम् ।
उदलम्बयदात्मानं सत्वरा नागदन्तके ॥ २०७ ॥
वेगादिषुरिवागत्य प्राणापहरणोद्यतम् ।
कण्ठपाशं तमेतस्याः कालपाशमिवाक्षिपम् ॥ २०८ ॥
शयनीयमथानीय सजलैर्व्यजनानिलैः ।
बलात्प्रत्यानयं संज्ञां प्रेतराजकुलादहम् ॥ २०९ ॥
क्रमेणोन्मील्य नयने मन्थरा ताम्रतारके ।
निनीय मयि मत्तश्च प्रत्याहृत्येदमब्रवीत् ॥ २१० ॥
तन्मित्रमतिकष्टाद्यद्व्यसनात्किल रक्षति ।
व्यसने प्रहरन्त्या तु शत्रुत्वं दर्शितं त्वया ॥ २११ ॥
अहं हि सर्वदुःखानामिदमुत्पन्नमालयम् ।
त्वया जीवितमुज्झन्ती विधृता किमकारणम् ॥ २१२ ॥
आनुकूल्येन निर्वाह्य कालमेकपदे त्वया ।
विघ्नन्त्या मम संकल्पं दर्शिता प्रतिकूलता ॥ २१३ ॥
यदेतदुच्यते लोके सर्वथा न तदन्यथा ।
अशेषोपायदुःसाध्यो मित्रं शत्रुर्महानिति ॥ २१४ ॥
ब्रुवाणामित्यसंबद्धमित्येनामहमब्रवम् ।
स्वामिनि प्रभुरित्यस्यानुपालम्भेन तच्चसि ॥ २१५ ॥
इदं कथय नस्तावद्व्यसने ऽभ्युदये ऽपि वा ।
स्वामिन्या वयमायाते कस्मिन्नाभ्यन्तरीकृताः ॥ २१६ ॥
जातासि कृपणेदानीं दासवर्गमपास्य या ।
तनुमेकाकिनी त्यक्त्वा सुखमासितुमिच्छसि ॥ २१७ ॥

206. bhūyomemahaṃ *nm.* — 207. āṣajya B[1]. — 208. -āprahaṇo- B[1]; kaṇṭhayāsan B. — 210. -onmīlā B; tāṃmra B; niṇaya B[1] niṇīya B[2] niçāya *nm;* mapimaṃtaçca *nm.* — 211. vāsanāt *nm;* rakṣyati *nm;* vāsane *nm.* — 212 *om. nm;* āhaṃ B[1]. — 213. 213 ab *om. nm;* ānukūlena B. — 214. sādhyo *sur grattage* B; mitraçatrur B. — 215. abruvaṃ B[2]*nm.* — 216. vyasano B[1]. — 217. kṛpane B; dāsa.rgam (*trou*) B dāsa-argam *nm;* apāçyayā; sukhamākṣitum *n* mukhamā- *m.*

206. Tasmin : (puissé-je être sa femme, demeurant) avec lui. Exemples de cet emploi du locatif, d'ordinaire avec vas-, demeurer, dans Speijer, *S. S.*, 137. — 215. Prabhur iti : parce que tu te dis que tu as tout pouvoir (de nous blesser).

दुःखहेतुमतः शंस यदि साध्यं भविष्यति ।
जीविष्यामस्ततः सर्वा मरिष्यामो विपर्यये ॥ २१८ ॥
अथ स्थित्वा क्षणं तूष्णीं शनकैरिदमब्रवीत् ।
एकजीवशरीरायै किं तुभ्यमपि कथ्यते ॥ २१९ ॥
अथ आनन्त्यपि त्वं मां निर्लज्जयितुमिच्छसि ।
इदमाख्याय ते को वा स्त्रीभ्यः साहसिकः परः ॥ २२० ॥
अहं राजकुलं याता देवेनाहूय सादरम् ।
दक्षिणं परिघाकारमूरुमारोपिता तदा ॥ २२१ ॥
उपविष्टस्तु नृपतेरूरौ वामे नृपात्मजः ।
मया दृष्टः प्रविष्टश्च हृदयं मे ऽनिवारितः ॥ २२२ ॥
दहनो ऽपि वसन्नन्तर्न दहत्यरणीं स तु ।
सौम्यो ऽपि पुण्यवानस्मान्निर्धूमं दग्धुमिच्छति ॥ २२३ ॥
स हेतुरस्य दुःखस्य सकृद्दर्शनमागतः ।
अधुना श्रूयमाणो ऽपि किं वा विलपितैरिति ॥ २२४ ॥
श्रुत्वेदमहमस्यास्तु जाता यत्सत्यमाकुला ।
उपायमेतमाशङ्क्य समुद्रोत्सेकदुष्करम् ॥ २२५ ॥
हा हेति हसितेनोच्चैर्गूहमाना विषण्णताम् ।
एतामाश्वासयामि स्म निःसारैर्वचनैरिति ॥ २२६ ॥
मुञ्च स्वामिनि संतापमपि विद्याधरेश्वरम् ।
वशयेयं तव प्रीत्यै किं पुनः पुरुषेश्वरम् ॥ २२७ ॥
किं तु त्वरावता शक्यं न लब्धं फलमीप्सितम् ।
राजानो ऽपि हि सामादीन्क्रमेणैव प्रयुञ्जते ॥ २२८ ॥

218. jīvisyāmas B. — 219. ksaṇatū- B; kathyase *n* kathyame *m.* — 223. ariṇīm B ariṇām *nm.* — 224. çrūyamāno. — 225. ahasyās B[1]; duskaraṃ B. — 226. enām *nm.* — 227. -dharesvaraṃ B; purusesvaraṃ B. — 228. kiṃturāvatā B[1]; 'çakyaṃ B; kramènaiva B.

---

220. Nirlajjayitum : «débarrasser quelqu'un de sa honte». Ce n'est pas nis- + lajj- (causal); nirlajj- n'est pas attesté; le sens montre qu'il s'agit du dénominatif dérivé de nirlajja.

221. Cf. VII, 18 et aussi X, 192 note.

228. Çakyaṃ : on peut lire aussi bien açakyaṃ (avec B), en ponctuant après ce mot. Le sens est un peu différent : (quand on se presse trop) le fruit désiré est impossible (à conquérir).

Sāmadīn kramenaiva prayuñjate : ils usent de paroles conciliantes avant d'employer, l'un après l'autre, les autres moyens (dāna, bheda, daṇḍa), la force en dernier lieu.

तेन धैर्यप्रकर्षेण मनः संधृत्य चञ्चलम् ।
सोढेनावधिता कांश्चित्सहस्र दिवसानिति ॥ २२९ ॥
तं चेयं सिद्धमेवार्थमर्थिभावादबुध्यत ।
अन्तःप्रकाशयत्तोषं विकसन्मुखपङ्कजा ॥ २३० ॥
दिवसे दिवसे चैतां वचोभिर्मधुरामृतैः ।
कार्यसंसिद्धिसंबद्धैर्दर्शिताशामयापयम् ॥ २३१ ॥
वन्ध्योत्तरैर्यदात्मानं वध्यमानाममन्यत ।
मोक्तुकामा तदा प्राणान्पुनरुत्प्रेचिता मया ॥ २३२ ॥
ततः संभ्रान्तया गत्वा मयास्या मातुरन्तिकम् ।
संप्रधार्य तया सार्धमुपायो ऽयमनुष्ठितः ॥ २३३ ॥
शरीरं राजपुत्रस्य द्वितीयमिव गोमुखः ।
स केनचिदुपायेन वेश्मास्मु प्रवेश्यताम् ॥ २३४ ॥
स एव सहचारित्वादानेष्यति नृपात्मजम् ।
मनःश्रोत्रहरालापो वसन्तमिव कोकिलः ॥ २३५ ॥
कलिङ्गसेनया चायं वृत्तान्तः कथितस्तदा ।
पद्मावत्यै तया चासि चेतस्य इति भाषितः ॥ २३६ ॥
ततः सारथिकायस्थहस्त्यारोहादिभिस्तथा ।
धूर्तैरस्मत्प्रयुक्तैस्त्वं वेश्मैतं प्रवेशितः ॥ २३७ ॥
तिसृणां च प्रयुक्तानामभवद्भवतः प्रिया ।
तन्त्रीणां वर्णतन्त्रीव मधुरा पद्मदेविका ॥ २३८ ॥
सा तु निर्वर्तितस्वार्था सुहृदर्थपराङ्मुखी ।
न निवेद्यते तुभ्यं स्वार्थभ्रंशविशङ्कया ॥ २३९ ॥
नोपायमपरं दृष्ट्वा प्रयुक्तं भर्तृदारिका ।
असाध्यायतनिश्वासा निराशा दृश्यतामिति ॥ २४० ॥

229. sahaçva B. — 230. *Il semble que, dans* B, ceyaṃ *soit corrigé par grattage en* cedam. — 231. cetāṃ B cetya *nm;* vacobhār B[1]; madhurāvṛteḥ *n* madhurāvṛtai *m;* saṃvaddhaiddar- B saṃcaddhedar- *n* saṃvaddhedar- *m.* — 234. veçamāsupra- B veçagāmupa- *nm.* — 238. pra-ktānāṃ *m.* — 240. nirāsā B.

238. Ces filles sont comparées aux cordes d'un luth; varṇatantrī = la corde qui donne le ton = celle qui vibrait à l'unisson avec toi.

तदिदं दुःसहं दुःखं यस्मादस्माकमागतम् ।
त्वदायत्तः स शेषश्च संविधत्तां भवानिति ॥ २४१ ॥
अथाहमब्रुवं कस्मान्नखच्छेद्यमुपेक्षया ।
कुठारच्छेद्यतां नीतं भवतीभिरिदं तृणम् ॥ २४२ ॥
स्वयमेव ततो गत्वा देवी विज्ञापिता मया ।
मुच्यतामेष संतापः सिद्धं विद्धि प्रयोजनम् ॥ २४३ ॥
युवराजार्थिनी देवी स चर्तगुणवत्सलः ।
संधाता गोमुखश्चेति धन्यस्त्रिकसमागमः ॥ २४४ ॥
नास्त्येव च ममायासः शरत्कान्त्युन्मना यतः ।
राजहंसो हि नलिनीं स्वयमेवोपसर्पति ॥ २४५ ॥
अलं चालापजालेन सर्वथाहं नृपात्मजम् ।
स्वामिन्यै कारयिष्यामि प्रणाममचिरादिति ॥ २४६ ॥
साब्रवीन्न नर्मभाव्यमिदं नागरके त्वयि ।
किं तु प्रस्तावमासाद्य यतेथाः कार्यसिद्धये ॥ २४७ ॥
अप्रस्तावप्रयुक्ता हि यान्ति निष्फलतां क्रियाः ।
अनिष्टफलतां वापि कोपयित्वा प्रभूनिति ॥ २४८ ॥
ततस्तस्यै नमस्कृत्य कुमारवटकामगाम् ।
उच्छिष्टानागतश्चास्मि गृहीत्वा मोदकादिकान् ॥ २४९ ॥
तां च विज्ञापयामि स्म राजपुत्रेण मोदकाः ।
स्वयमारभ्य हस्ताभ्यां युष्मभ्यं प्रहिता इति ॥ २५० ॥
साब्रवीज्जालमप्येतदाश्वासयति मादृशम् ।
आश्वसन्ति क्षणं दृष्ट्वा मृगा हि मृगतृष्णिकाम् ॥ २५१ ॥
माल्यचन्दनताम्बूलवासोभूषणधूपनैः ।
युष्माभिः प्रेषितानीति तामाश्वासितवानहम् ॥ २५२ ॥

241. āyattaṃ *nm;* saçeṣaçca *ex* saççeṣaçca B caçeṣaçca *n.* — 244. sacartta *ex* sacārtta B savarta *m;* dhanyastriyakasa- B[1] dhanyaphastiryaksa- *n* dhamyastiryaksa- *m.* — 247. yathevoḥ B *sur grattage.* — 248. aniṣṭampha- B aniṣṭampha- *nm.* — 249. vaṭukām *m.* — 250. tāçca *nm;* yusmabhyaṃ B. — 251. āsvāsayati B; āçvāsanti B[1]*nm.* — 252. bhūṣadhūṇadhūpanaiḥ B[1]; yusmābhiḥ B yuṣmibhiḥ *nm;* āsvāsitavān B.

243. Devī : Madanamañjukā.
249. Kumāravaṭakām : cf. VI, 15.
252. Yuṣmābhiḥ preṣitānīti : en disant qu'ils étaient envoyés par vous.

एष विज्ञापयाम्यद्य श्वो विज्ञापयितेति च ।
लब्धावसरः कालमेतावन्तमयापयम् ॥ २५३ ॥
अथ मामब्रवीद्देव्याः पुरतो मुद्रिकालता ।
अहो संभावना कार्या महानागरको भवान् ॥ २५४ ॥
प्रणामं कारयामीति विस्फूर्ज्य भवता तथा ।
किमियं वञ्च्यते मुग्धा पत्त्रपुष्पफलादिभिः ॥ २५५ ॥
अथ वा तिष्ठ तावत्त्वमहमेवानयामि तम् ।
विरक्तमपि संधातुमलं कौशलमस्ति नः ॥ २५६ ॥
एवमुक्तेर्ज्जितस्तस्या गुरुभिर्वचनैरहम् ।
फलेन ज्ञास्यसीत्युक्त्वा प्रस्तावावहितो ऽभवम् ॥ २५७ ॥
यात्रायां तु प्रवृत्तायामभ्यासे ऽत्र यदेव मे ।
तन्मया कारिता यूयं चिप्त्वा हरिशिखादिकान् ॥ २५८ ॥
यत्तत्प्रवहणं गच्छत्पथि युष्माभिरीक्षितम् ।
तदर्यदुहिताध्यास्त विद्युदभ्रमिव ध्वनत् ॥ २५९ ॥
तत्र यत्तन्मुखस्यार्धं ललाटनिहिताङ्गुलि ।
युष्मभ्यं दर्शितं वन्द्यं तत्तया वन्द्यमानया ॥ २६० ॥
यच्च विज्ञापिता यूयमानतं मुकुटं मनाक् ।
उन्नम्यतामिति मया तत्रापीदं प्रयोजनम् ॥ २६१ ॥
आसीदास्तां प्रणामो ऽयमर्यपुत्रेण नागरः ।
छतस्तोषयता कान्तामस्माकं स्वामिनीमिति ॥ २६२ ॥
सेयं कामयते देवं देवी मदनमञ्जुका ।
प्रज्ञापराक्रमप्राणं लक्ष्मीरिव नराधिपम् ॥ २६३ ॥
अयत्नोपनता चेयं न प्रत्याख्यातुमर्हति ।
नवेव मालतीमाला लोभनीयगुणाकृतिः ॥ २६४ ॥

253. çvau B. — 254. kārya B. — 255. vacyate B; patra; phalaṃ *nm.* — 256. saṃdhātumaulaṃ *nm.* — 258. abhyāsaitupadevame B[1] -yadevame B[2] abhyāsetupadevase *nm.* — 259. yusmābhir B; āsthitaṃ *nm;* ārya- B[n]; -āstaṃ. — 260. yusmabhyaṃ B; tantayāvandamānayā B taṃtayorvadyamānayoḥ *n* taṃtayorvaṃdyamānayoḥ *m.* — 262. ārya- B[n]; çcāsinīm *nm.* — 264. naceva *nm.*

258. Abhyāse 'tra : correction nécessaire, tu ne donnant pas de sens. Abhyāse ou abhyāçe; les deux lectures se valent à peu près.

264. -guṇākṛtiḥ : jeu de mots banal sur guṇa. La guirlande de jasmin (qui est faite comme une corde) est, elle aussi, tombante, à portée de la main.

दृष्टानङ्गभुजंगेन लघु संभाव्यतामसौ ।
न ह्याशीर्विषदग्धान्ताः क्षमन्ते दिवसानिति ॥ २६५ ॥
इति गोमुखतः श्रुत्वा कथां नवदशप्रियाम् ।
तत्कथापहृतव्रीडः प्रकाशमहमब्रवम् ॥ २६६ ॥
तदैव हृदये ऽस्माकं राजोत्सङ्गनिषण्णया ।
अशीर्णं मन्मथतरोः प्रकीर्णं बीजमेतया ॥ २६७ ॥
तद्गुणश्रवणाम्भोभिः सिच्यमानं तदा तदा ।
बाधमानं मनो जातमुच्छ्वसत्कर्कशाङ्कुरम् ॥ २६८ ॥
तद्दोहदमिवासाद्य प्रियां प्रवहणे स्थिताम् ।
कम्पनिःश्वासजननानमुञ्चत्पल्लवानिव ॥ २६९ ॥
समाप्तावयवो यावन्मनोभवमहातरुः ।
न समाक्रम्य मृद्नाति तावद्दर्शय तामिति ॥ २७० ॥
तेनोक्तं नर्तनाचार्यावस्पर्धेतां परस्परम् ।
त्वत्प्रवीणो ऽहमित्युक्तौ तौ च भूपतिना किल ॥ २७१ ॥
अलं वां कलहं कृत्वा कर्मशास्त्रविदौ युवाम् ।
यस्य या कुशला शिष्या स नर्तयतु तामिति ॥ २७२ ॥
श्वः सुयामुनदन्तां च तस्मादर्यसुतां च नः ।
नृत्यन्तीं नृपतिर्द्रष्टा तत्र द्रष्टास्य तामिति ॥ २७३ ॥

265. -āntāḥ. — 266. abruvaṃ B[2] abruvan *n.* — 267. tadeva *nm;* rājansaṃga *nm;* asīrṇnaṃ B asīrsmaṃ *m.* — 271. aspadhetām B adhyasyatāṃ *nm.* — 272. vā; çikṣā *nm;* sāstra B. — 273. suyāmunadantāñ (*ou* -dattāñ (B sudhāsunadaṃtāṃ *n* sudhāsudanaṃtāṃ *m.*

265. Āçīrviṣa- : je garde āçīrviṣa au lieu de āçīviṣa, d'abord parce qu'un manuscrit de *Halāyudha* donne cette forme (III, 19); ensuite parce qu'elle est de nature à suggérer un jeu de mots (le poison de l'espérance).

266. Navadaçapriyām : agréable comme neuf ou dix. Cf. tricatura (trois ou quatre), etc.

268. Karkaçā = tragia involucrata; c'est une sorte de ronce aux feuilles piquantes.

Ainsi germa l'amour dans mon âme surprise;
Je croyais ne semer qu'une fleur de printemps;
C'est un grand aloès dont la racine brise
Le pot de porcelaine aux dessins éclatants.
(Th. Gautier.)

269. Dohadam : désigne spécialement l'«envie» d'une femme enceinte (voir le colophon du chap. V). L'arbre (d'ordinaire l'açoka) désire un contact voluptueux pour fleurir; de même l'arbre-amour s'est épanoui quand son envie de voir Madanamañjukā a été satisfaite.

271. Nartanācāryau : le maître de ballet du roi et le maître de ballet de la reine ou des reines (Madanamañjukā doit être l'élève de ce dernier). Le concours de danse provoqué par leur rivalité est un des moyens ordinaires dans la comédie pour mettre l'héroïne sous les yeux de son amant. Cf. *Mālavikāgnimitra.*

या स्वाभाविकसंभ्रमखण्डितवक्रूपाभिमाना प्रिया
शृङ्गारादिरसप्रयोगसुभगा जायेत सा कौतुकी ।
इत्यध्यासितचेतसा कथमपि प्रक्रान्तया चिन्तया
पर्यङ्काङ्कविवर्तिनर्मतनुना नीता त्रियामा मया ॥ २७४ ॥

इति रथ्यासंलापो नाम सर्गः ॥ १० ॥

274. khaṇḍata B[1] khaṃḍika *nm;* ityādhyāsita B ityādhyaisita *n* ityāḍhyāsita *m;* vivarttinättatanunā B[1].

iti *om.* B; rathāsaṃlāpo.

274. Çṛṅgārādirasa-: en effet, d'après l'histoire qui vient d'être contée, Madanamañjukā a mis en jeu différents *rasas*, l'érotique (par son amour violent), le comique (par sa première conversation avec Gomukha et le piège où il est tombé), le pathétique (par sa douleur), le tragique (par sa tentative de suicide).

Mètre : çārdūlavikrīḍita.

# XI

अथ नागरकाकारस्तदाकारगुणावृतः ।
संप्रस्थाप्य जनः पूर्वं नृपास्थानमगामहम् ॥ १ ॥
तत्र पुष्पकसंस्थानमध्यस्थानं महीपतिम् ।
प्रणम्य तदनुज्ञातो मञ्चान्तरमध्यासिषि ॥ २ ॥
रङ्गाङ्गणमथालोक्य कुशलप्रेक्षकाकुलम् ।
नृत्याचार्यौ नमस्कृत्य महीपालमवोचताम् ॥ ३ ॥
राजन्नुपान्तनेपथ्ये नृत्ये वः समुपागते ।
द्रष्टुमिच्छथ यां पूर्वमाज्ञापयत तामिति ॥ ४ ॥
सोऽब्रवीन्नृत्यगीतादिकलाशास्त्रविशारदः ।
गोमुखः स च यामाह सा पूर्वं नृत्यतामिति ॥ ५ ॥
ताभ्यामागत्य पृष्टश्च का पूर्वं नृत्यतामिति ।
स सुयामुनदत्तेति तदुपाध्यायमादिशत् ॥ ६ ॥
ततस्तस्यां प्रनृत्तायां प्रनृत्ता नृत्यवेदिनः ।
रङ्गप्रेक्षस्तु निश्चेष्टः सुषुप्तावस्थतां गतः ॥ ७ ॥
प्रत्याहृत्य ततश्चेतो ह्रियमाणं बलात्तया ।
मनोनेत्राङ्गसंचारैरनाहार्यैरचिन्तयम् ॥ ८ ॥
नानुगन्तुमलं रम्भा नृत्तमस्याः समेनका ।
कुत एव पराजेतुमबला बालिका प्रिया ॥ ९ ॥
राजहंसः पिपासान्धः प्राप्तः पङ्कजिनीं यथा ।
पङ्काविलजलां पश्येत्तथाध्यासमहं प्रियाम् ॥ १० ॥
अवोचं गोमुखं चेदं जीयमानां प्रियामहम् ।
अशक्तः प्रेक्षितुं तेन रङ्गान्निर्गम्यतामिति ॥ ११ ॥

1. mataḥ *nm*. — 2. maçca- *nm*; mahīṃpatiṃ B. — 4. māmiti *n*. — 7. pravṛttā *n*; susuptā-; -āvasyatām *n*; gatāḥ. — 9. nṛtyam *nm*. — 11. avocad.

9. Rambhā et Menakā : apsaras.

तेनोक्तमिच्छया गन्तुमागन्तुं वा न लभ्यते ।
वत्सराजकुलात्तेन मुहूर्तं स्थीयतामिति ॥ १२ ॥
विरतायां ततस्तस्यां पुराणार्करुचाविव ।
जीवलोकमिव ज्योत्स्ना प्रिया रङ्गमरञ्जयत् ॥ १३ ॥
अपृच्छं गोमुखं चासां कतमा पद्मदेविका ।
मुद्रिकालतिका चेति स विहस्येदमब्रवीत् ॥ १४ ॥
कीर्तिकान्त्योरियं मध्ये या लक्ष्मीरिव राजते ।
एषा नः स्वामिनी देवी वामतो मुद्रिकालता ॥ १५ ॥
न चेयं शक्यते जेतुमलं वः शङ्कया यतः ।
दृष्टा केन शरज्ज्योत्स्ना खद्योतप्रभया जिता ॥ १६ ॥
मया विजयमानेयमनेकं नर्तकीशतम् ।
दृष्टा संभावयाम्यस्यास्तेन नृत्तगुणानिति ॥ १७ ॥
गोमुखाभिमुखो यावत्सावधानं शृणोम्यहम् ।
तावज्जय जयेत्युच्चैर्विमुक्तः प्रेक्षकैर्ध्वनिः ॥ १८ ॥
रङ्गाद् दृष्टा च निर्यान्ती वाध्यमानेव सा मया ।
दैन्यवेपथुवैवर्ण्यविषादैः सहजैरिव ॥ १९ ॥
ततो विसर्जितास्थानं नमस्कृत्य महीपतिम् ।
स्वमावासं व्रजामि स्म कान्ताचिन्तापुरःसरः ॥ २० ॥

. . . . . . . . . . . . . . . . . . . . . . . . . .

. . . . . . . . . . . . . . . . . . . . . . . . . .

. . . . . . . . . . . . . . . . . . . . . . . . . .

. . . . . . . . . . . . . . . . . . . . . . . . . .

12. vansarājakulātena B[1] -kulāttena B[II] vatsarā-kulātena *nm;* mumūrttaṃ B. — 13. jyo.ā (*trou*) B. — 14. aprchad: cāsyāṃ B[1] cāsyā B[2] cāsya *nm.* — 15. kāntor B[1]; deṿīmravāmato B[1] devīvāsanā *nm.* — 16. drṣṭvā *n;* çarajyotsnā. — 17. açyās B. — 18. sāvadhāna B sāvaṃdhāna *nm;* dhvaniṃ *nm.* — 19. vevartyairvi- *n* vaivartyairvi-.

**14. Āsāṃ** : «d'entre elles». La correction cāsāṃ (ca-āsāṃ) est la plus simple. On pourrait aussi songer à cāsyāḥ (ca-asyāḥ) «par rapport à elle», ou encore à akṣva «dis».

**16. Iyaṃ** : Madanamañjukā.

**Çarajjyotsnā** : la clarté de la lune d'automne est un des lieux communs les plus rebattus de la poésie descriptive (*Ṛtusaṃhāra*, Çarad).

18-19. Les spectateurs l'accueillent favorablement et pourtant elle quitte la scène immédiatement, sans avoir dansé. Cela sera éclairci au v. 47.

गोमुखं चाब्रवं कस्मात्त्वमिदानीमुपेक्षसे ।
न ह्यादेशमुपेक्षन्ते त्वादृशा मादृशामिति ॥ २१ ॥
तेनोक्तमपरः कश्चित्प्रत्ययार्थं विसर्ज्यताम् ।
अश्रद्धास्यति न मे वाक्यं विप्रलब्धा हि सा मया ॥ २२ ॥
एषामन्यतमं याहि गृहीत्वेति मयोदिते ।
मरुभूतिक एवात्र योग्य इत्ययमुक्तवान् ॥ २३ ॥
अयं हरिशिखस्तावन्नीत्या वक्रगतिः क्षतः ।
अपायशतमालोच्य कदाचिज्जालमालिखेत् ॥ २४ ॥
कथं कष्टतमे चासौ व्यसनानां चतुष्टये ।
यत्प्रधानस्त्रियस्तत्र राजपुत्रः प्रवर्त्यते ॥ २५ ॥
एवमङ्गुलिभङ्गेन विचार्यालोकपण्डितः ।
विहन्यादपि नः कार्यं तस्मादेष न युज्यते ॥ २६ ॥
तपन्तको ऽपि बालत्वान्मूढः शून्यमुखो यतः ।
तस्मादेवंविधे कार्ये नियोगं नायमर्हति ॥ २७ ॥
विक्रमैकरसत्वाच्च समर्थो मरुभूतिकः ।
अभ्यस्तसाहसस्तस्मादेष प्रस्थाप्यतामिति ॥ २८ ॥
ततस्तौ सहितौ यातौ चिरात्तु मरुभूतिकम् ।
प्राप्तं हरिशिखो ऽपृच्छत्किं वृत्तं भवतोरिति ॥ २९ ॥
तेनोक्तमावयोस्तावद्वेशमध्येन गच्छतोः ।
आयात्यभिमुखी चैव सैव याति पराङ्मुखी ॥ ३० ॥

21. *Les manuscrits n'indiquent aucune lacune entre 20 et 21, mais la solution de continuité est évidente; il manque au moins deux çlokas (voir les notes); comme on ne peut déterminer l'étendue de la lacune, je n'assigne pas de numéros aux çlokas omis.* — abruvaṃ *nm;* upekṣyante B²(?)*nm.* — 22. pratyayārtha B pratyayortham *nm.* — 23. anyenasaṃcāhi *nm.* — 24. tāvaçītyāvakramatiḥ *nm;* kṛta B; kadācijvālam *nm.* — 26. kāryaṃ tasmād eṣa na *om. nm;* pūjyate *nm.* — 29. cirāṃtu B. — 30. āyātyamubhimukhī B¹.

21. Il y a entre 20 et 21 une lacune de deux çlokas au moins : Naravāhanadatta a dû enjoindre à Gomukha d'aller chercher Madanamañjukā et celui-ci a refusé.

26. Aṅgulibhaṅgena : «en recourbant le doigt», le doit croche, signe de colère et de menace; cf. 31.

30-32 : Veçamadhyena ... etc.: Il s'agit non de la demeure de Madanamañjukā à Kauçāmbī, mais du lieu où séjournent les courtisanes au Nāgavana.

भजन्ती चाटुकुर्वीः क्रोधादद्यार्यसुताकोपना ।
न स्प्रष्टव्यो न संभाष्यो गोमुखः पापवानिति ॥ ३१ ॥
कुब्जदौवारिकाज्ञाताद्धाटकखचतोरणैः ।
कक्ष्याद्वारैः प्रविष्टो ऽसौ स्थानमार्यसुताश्रितम् ॥ ३२ ॥
तत्रैका दारिकावोचद्दारिकाः पश्यताद्भुतम् ।
धूर्तेनानेन चातुर्याद्गोमयं पायसीकृतम् ॥ ३३ ॥
अपराधो ऽप्यनेतावत्सर्वः प्रायशः कृतः ।
तमेव पश्यतानेन चापलेन गुणीकृतम् ॥ ३४ ॥
वन्द्यमानो यदा कोपात्स्वामिन्या नाभिनन्दितः ।
संभ्रान्तश्च विलक्षश्च तदा तामाह गोमुखः ॥ ३५ ॥
मन्ये निष्कारणं कोपं देव्याः को नाम तादृशः ।
सेवकः परचित्तज्ञः स्वामिनं कोपयेदिति ॥ ३६ ॥
तथाप्यतनया कोपात्तालवृन्तभृतोदितम् ।
कथं निष्कारणो नाम किमिदं लघु कारणम् ॥ ३७ ॥
उत्कण्ठादर्शमिच्छन्तो यस्यापि चिरकाङ्क्षितम् ।
त्वया नर्तयता कान्ता विनियं सुखमासिता ॥ ३८ ॥
अथ वा तावकं नाम स्वामी किंकारणं त्वया ।
पश्यन्नभिमुखं प्रीत्या स तथा विमुखीकृतः ॥ ३९ ॥
भवान्पश्यतु वा मा वा त्वद्विधेयो युवा जनः ।
त्वमिच्छसि जयं यस्याः किमसौ न पराजिता ॥ ४० ॥
ततो ह्रियावनमितं मुखमुन्नम्य गोमुखः ।
उक्तवान्पश्यतानर्थं दोषीभूतो गुणो ऽपि नः ॥ ४१ ॥

31. bhajaṃtīṃ *nm;* nasaprastavyo B naspuṣṭavyo *n* naspṛṣṭavyo *m;* nasambhāvyo *nm.* — 32. dvauvārikā- B dauvārivā- *n* ddauvārikā- *m;* kakṣā *nm;* sva. — 34. etāvāt B[1]; sarpaḥ B sadyaḥ *nm.* — 36. tādṛçaḥ *nm;* paricintajñaḥ B paricittajñaḥ *nm.* — 37. tālavṛtta B. — 38. -darçanam B; sukhamāsimāsitā B. — 39. abhimumkham B. — 40. yuvā : 'thavā B thavā *nm;* icchāsi *nm.* — 41. mukhammunnamyago- B sukhannāya-go- *n* sukhannāyago- *m;* -ānarthe *nm.*

32. **Aryasutā: il faut respecter arya-, comme dans aryaputra.**

38. **-darçam : darçanam, de B, est une glose passée dans le texte.**

40. **Jaya avec un génitif signifie la «victoire *sur* quelqu'un»; donc icchasi jayam yasyāḥ... asau est «celle dont tu désires la défaite».**

[XI] 

यदि प्राक् स्वामिनी नृत्येत्तथा राजा सुतोषितः ।
कदाचिदितरां नैव पश्येन्नृत्तकुतूहलः ॥ ४२ ॥
तदा च गुणविद्वेषी जनो वक्ता भवेद्यथा ।
पक्षपातान्नरेन्द्रेण दृष्टा मदनमञ्जुका ॥ ४३ ॥
इतरा यदि नृत्यन्ती तेन दृष्टा भवेत्तदा ।
नोर्वशीमपि पश्येत्सः सुतो मदनमञ्जुकाम् ॥ ४४ ॥
प्रोत्या यच्चोन्मुखः पश्यन्नतः स्वामी पराङ्मुखः ।
अथोपायः प्रयुक्तो ऽसौ कथमित्यवधीयताम् ॥ ४५ ॥
न सुधामुनदत्तायाः शक्यः कर्तुं पराभवः ।
कृतानुकरणैः साक्षान्नरतेनापि नृत्यता ॥ ४६ ॥
आर्यपुत्रे तु विमुखे युष्माभिः सा पराजिता ।
सहृदैरेव वैवर्ण्यविवादस्वेदवेपनैः ॥ ४७ ॥
तेन ब्रवीमि सेवापि याति यचपराधताम् ।
अतथ्याराधितभर्तारः सेवका हन्त दुःखिताः ॥ ४८ ॥
अथवा सापराधो ऽपि दूतः संमानमर्हति ।
संदेशश्रवणात्तेन संमानयत मामिति ॥ ४९ ॥
अथ सा च परावृत्य प्रसादविशदानना ।
ईषद्विहसितज्योत्स्नासलिलक्षपिताधरा ॥ ५० ॥
अयि चन्द्रमुखं मा स्म गोमुखं परुषं वद ।
न हि वत्सेश्वरामात्याः श्रूयन्ते स्त्रीसुहृद्द्रुहः ॥ ५१ ॥
अनालापेन यच्चासि पशुनायासितो मया ।
तत्क्षमस्व न हि स्वस्था बाधन्ते त्वादृशामिति ॥ ५२ ॥

42. neva. — 43. -mañjukāḥ B[1]. — 46. -dattāyāḥ ; çakya B. — 47. vaivarṇā *nm*. — 48. yātidyaparadhitāṃ *n* -dhatāṃ *m;* daṃtaduḥsthitāḥ *nm*. — 49. arhatiḥ B; çaṃdeça *nm;* çravaṇāntena B; sammānayati. — 50. sātuparā- B gātuparā- *nm;* viṣadā-; hasitujyotsāsalilaglapitā- *nm*. — 51. api *nm;* suhṛdruhaḥ. — 52. tākṣamasva *nm;* svastho *nm*.

44. Urvaçī, parmi toutes les apsaras, connait les plus belles danses (*K. S. S.*, XVII, 22).

47. Je construis yuṣmābhiḥ avec vimukhe : c'est en montrant au prince Padmadevikā et Mudrikālatikā qu'il lui a fait détourner ses regards de Madanamañjukā.

Vivāda : les contestations (des spectateurs, les uns favorables, les autres hostiles)? Mais ce sens ne va guère avec sahajair.

51. Ce vers s'adresse à la fille qui vient de parler; le suivant à Gomukha.

52. Bādhante . . . tvādṛçām : génitif inquiétant : bādh- a son complément au génitif seulement quand le sujet désigne une maladie (*Pāṇ.*, II, 3, 56).

ततः सा गोमुखेनोक्ता द्रष्टुमिच्छति वः प्रियः ।
संदेहश्चेदियं मुद्रा तदीया दृश्यतामिति ॥ ५३ ॥
तयोक्तं कुम्भकाराणां कोटिर्वसति वः पुरे ।
कोटिः किमिति नानीता न हि ते क्षीणमृत्तिकाः ॥ ५४ ॥
तेनोक्तं केन वानीता मुद्रा वा मृत्तिकामयी ।
न ह्यारब्धमहाकार्याः प्रमाद्यन्ति सचेतसः ॥ ५५ ॥
यौगंधरायणसुतः प्रियं मित्रं प्रियस्य वः ।
स्वामिना प्रेषितः प्रीत्या दृश्यतां मरुभूतिकः ॥ ५६ ॥
अथ देवी नमस्कृत्य प्रीता विज्ञापिता मया ।
यत्संदिशति नः स्वामी युष्मभ्यं तन्निशाम्यताम् ॥ ५७ ॥
प्रेरितः त्वामहं द्रष्टुं येन लक्ष्मीमिवालसः ।
क्रीडतास्मद्विधैरेष विलक्षः क्रियतामिति ॥ ५८ ॥
प्रस्थितायां ततो देव्यामाह मां पद्मदेविका ।
इयं प्रसाध्यते यावत्तावदास्तां भवानिति ॥ ५९ ॥
देव्या सह प्रविश्यान्तर्मुहूर्तादिव सा ततः ।
आह प्रहृष्टप्रमुदा प्रफुल्लनयनोत्पला ॥ ६० ॥
मया कलिङ्गसेनायै तया गत्वा रुमण्वते ।
तेनापि भूमिपतये वृत्तान्तो ऽयं निवेदितः ॥ ६१ ॥
तेनोक्तं किमिहाख्येयं तरुणो ननु दारकः ।
जीवलोकसुखान्येष तस्मादनुभवत्विति ॥ ६२ ॥
सेयं राज्ञाभ्यनुज्ञाता गुरुणा मन्मथेन च ।
इयमायाति ते पश्चाद्यातु तावद्भवानिति ॥ ६३ ॥

55. cānītā B; -mayā *nm.* — 57. yusmabhyaṃ B. — 59. idaṃprasādhyame *nm.* — 63. manmathenava B[1] *nm.*

57. Mayā : Marubhūtika (c'est lui qui parle).

58. Sens bien différent selon que Marubhūtika 1° parle pour son propre compte : supposant que son maître a voulu lui faire voir le peu qu'il est, il engage Madanamañjukā à faire rougir le prince devant elle à son tour — ou 2° prête ces paroles à son maître : en ce cas, yena... eṣa = Gomukha : s'il n'a engagé le prince à voir Madanamañjukā que pour se gausser de lui, dans la pensée qu'elle refuserait, il sera bien marri de la voir se rendre à son appel. Marubhūtika ferait sa cour à Madanamañjukā tout en desservant Gomukha. Cette dernière interprétation est sans doute trop subtile.

63. Fin du rapport de Marubhūtika.

अथ प्रविश्य संभ्रान्ता प्रतीहारी न्यवेदयत्।
शयानो गोमुखः प्राह लघु श्रावय मामिति ॥ ६४ ॥
मयोक्तं गोमुखस्तावदेकाकी प्रविशत्विति।
स प्रविश्योक्तवान्द्वारे देवी किं विधृतेति माम् ॥ ६५ ॥
अज्ञातप्रमदासङ्गमाकुलीभूतमानसम्।
कुरु नागरकं तावत्त्वं मामित्यहमुक्तवान् ॥ ६६ ॥
तेनोक्तं युद्धवेलायां दम्यन्ते तुरगा इति।
यदेतद् घुष्यते लोके तदेतत्तथ्यतां गतम् ॥ ६७ ॥
न नागरकतां प्राप्तुमुपदेशेन शक्यते।
इयं हि मोक्षविद्येव प्रयोगावृत्तिसाधना ॥ ६८ ॥
संक्षेपतस्तु वक्ष्यामि यद्यद् देवी करिष्यति।
तत्तदेवानुकुर्यास्त्वं दक्षो हि लभते श्रियम् ॥ ६९ ॥
अनुशिष्य स मामेवं निर्यायानीय च प्रियाम्।
सुखं सुप्यास्तमित्युक्त्वा यथास्वं ससुहृद्गतः ॥ ७० ॥
ततः प्रविश्य दयिता मामर्धाक्ष्णा निरैक्षत।
छतं तथैव च मया वन्दितेन च वन्दिता ॥ ७१ ॥
सर्वथा यद्यद्देवाहमनया कारितस्तदा।
तदेवानुकरोमि स्म नर्तनाचार्यशिष्यवत् ॥ ७२ ॥
अथ बुद्धानुकूलं मामियमन्वर्थवेदिनम्।
स्मित्वा सोत्कम्परोमाञ्चं गाढमङ्गमपीडयत् ॥ ७३ ॥
ततोऽहमनपेक्ष्यैव तत्कातानुष्ठतक्रमम्।
अशरीरस्य कस्यापि गतो भूतस्य वश्यताम् ॥ ७४ ॥

64. ṣayāno B yayāyo *nm.* — 65. vadhṛteti B vaidhṛtemi *nm.* — 66. tāvatvaṃ. — 67. dāmyante *nm.* — 68. upadeçita *nm.* — 69. yadyadevī B yaccadevī *nm.* — 70. anuçiṣyatamām *nm;* niryāpānīya B; suyyāstam B. — 71. ardhākṣo *nm;* nirīkṣyata B -īkṣata *nm.* — 73. buddhā-; atyarthaveditaṃ *nm;* romāñca. — 74. anapakṣyaiva B; vasyatām B.

65. Tāvad ajoute la nuance de « d'abord » (la visiteuse entrera *ensuite*).

67. Il faut lire damyante avec B (passif du causal). Le copiste de *nm* a confondu avec dāmyanti.

Tathyatāṃ : abstrait dérivé de tathya « vrai ».

70. -çiṣya : gérondif archaïque, -çāsya classique.

Supyāstam : 2ᵉ p. duel précatif.



IMPRIMERIE NATIONALE.

स्त्रीपुंसतामागतयोरनभिप्रेतनिद्रयोः ।
प्रदोष एव क्षणदा क्षीणा क्षणपदावयोः ॥ ७५ ॥
प्रातः प्रवहणेनैव प्रियामादाय गोमुखः ।
मातुरेवानयन्गेहं मन्मानसपुरःसराम् ॥ ७६ ॥
वर्धमानरतेरेवमतियातेषु केषुचित् ।
दिनेषु मम संप्राप्तः सेनानीरिदमब्रवीत् ॥ ७७ ॥
अद्याष्टासु प्रयातेषु मुहूर्तेषु प्रवक्ष्यति ।
मौहूर्तानुमतो राजा रात्रैः शान्तिपुरःसरम् ॥ ७८ ॥
तारयिष्यामि यमुनामहं यात्रागतं जनम् ।
युष्माभिरपि कर्तव्यं यत्तदाज्ञाप्यतामिति ॥ ७९ ॥
मयोक्तं गोमुखो गत्वा युष्मान्विज्ञापयिष्यति ।
इति तस्मिन्गते मह्यं गोमुखेन निवेदितम् ॥ ८० ॥
अयं सवासुकगणः श्वो गन्ता गणिकागणः ।
तेनैव सहिता यूयं गन्तारः शनकैरिति ॥ ८१ ॥
गोमुखेन तु वृत्तान्ते कथिते ऽस्मिन् समण्वते ।
प्रतिष्ठे ससुहृत्प्रातः पृष्ठतो जनसंहतेः ॥ ८२ ॥
तच्च क्रीडागृहं प्राप्य कल्पितं यमुनातटे ।
दिवसं गमयामि स्म तं प्रियामुखोत्सुकः ॥ ८३ ॥
गोमुखानीतया सार्धमासित्वा कान्तया सह ।
निशायां यातकल्पायामपश्यं रुदतीमिमाम् ॥ ८४ ॥
किमेतदिति पृष्टा च मया संभ्रान्तचेतसा ।
यदा नोक्तवती किंचित्तदान्या दारिकाब्रवीत् ॥ ८५ ॥

76. sanmānasa B[1]*nm, mais, dans* B, *la partie inférieure de* sa- *a été légèrement grattée à gauche; bien que la transformation de* sa- *en* ma- *soit imparfaite, je crois que* B[2] *a voulu corriger en* manmānasa. — 78. mauhūrtāmumato *nm;* rātraiḥ *nm;* sāntaḥpuraḥsaraṃ B çāṃtaḥpuraḥ- *n* sāntapuraḥ- *m.* — 79. ājñāsyatām. — 80. gomukhogatvā (*sur grattage de* gomukha?tvā) B[2] gomukhaṃgatvā *nm.* — 82. pṛṣṭhate B[1] pṛṣṭhatī *m.*

76. Manmānasa- : (accompagnée) par mon cœur.

78. J'entends pravakṣyati comme le futur de pra-vah-.

Çāntipuraḥsaram : correction douteuse assurément, mais le texte des mss. ne donne rien d'acceptable.

83. Tac... krīḍāgṛham : la maison, sur la rive droite de la Yamunā, dont il a été question, VIII, 24.

अपैति गुणवत्सङ्गाद् दोषो दोषवतां किल ।
गणिकाशब्ददोषस्तु नैनामद्यापि मुञ्चति ॥ ८६ ॥
काशिराजस्य या कन्या वृता तुभ्यं पुरोधसा ।
तस्याश्चामरधारिण्या भवितव्यं किलानया ॥ ८७ ॥
सेयमुत्प्रेक्ष्य तद् दुःखं दारुणं मरणादपि ।
विषपानकृतोत्साहा हातुमिच्छत्यसूनिति ॥ ८८ ॥
मयोक्तमहमप्यङ्गं त्वद्वियोगरुजातुरम् ।
नित्योत्क्षपितमक्षीवं त्यक्त्वा स्थास्याम्यवेदनः ॥ ८९ ॥
इत्यस्मिन्नेव समये प्राप्ता हरिशिखादयः ।
वृत्तान्तमेवमाकर्ण्य भीषणं सभियो ऽभवन् ॥ ९० ॥
ततः संभाष्य सुहृदाववोचन्मरुभूतिकः ।
वयमेव विषं पूर्वं पिबामः कल्प्यतामिति ॥ ९१ ॥
ततो हरिशिखेनोक्तं क्वासौ संप्रति गोमुखः ।
यो हि मूलमनर्थस्य स तावत्पाय्यतामिति ॥ ९२ ॥
तेन गोमुखमाह्वातुं प्रहितागत्य दारिका ।
अब्रवीद्गोमुखो वक्ति किं मयातः प्रयोजनम् ॥ ९३ ॥
दीर्घजीवितनामानमध्यायं चिरविस्मृतम् ।
अहमध्येतुमारब्धो वैद्यात्प्राणप्रदादिति ॥ ९४ ॥
ततो हरिशिखेनोक्तः क्रुद्धेन मरुभूतिकः ।
प्रेर्यमाणं गलाष्ट्राभिः शीघ्रमानय तं शठम् ॥ ९५ ॥
. . . . . . . . . . . . . . . . . . . . . . . . . . ।
. . . . . . . . . . . . . . . . . . . . . . . . . . ॥ ९६ ॥

86. apeti B ayeti *nm;* kilaḥ B. — 87. kāsi B kāsī *nm.* — 88. yeyam *nm;* taduḥkhaṃ B[1] *nm;* icchatasūn *nm.* — 89. nityokṣapitaṃ *nm;* akṣīva; sthāsyāmavedanaḥ B spāçyāma- *n* sthāçyāma- *m.* — 90. bhīsaṇaṃ B bhāṣaṇaṃ *nm;* samidho *n;* bhavat. — 92. pāpyatām. — 95. preryamānaṃ galāstābhis (-bhi B[1]).

87. Kāçirājasya kanyā : Naravāhanadatta épousera en effet, mais sous un nom supposé, la fille de ce roi, Bhagīrathayaças (cf. XXVIII).

89. -utkṣapitam : à rattacher soit à kṣap-; soit à kṣi- (causal); pas d'exemple avec ut-.

95. Galāṣṭrābhiḥ : correction qui parait assez sûre. Aṣṭrā = aiguillon; gala-aṣṭrā (au pluriel) = aiguillons à piquer la gorge (quelque chose comme un collier garni de pointes en dedans, un «collier de force»).

96. Lacune d'un çloka au moins entre 95 et 97. Marubhūtika ramène Gomukha. Le vers 97 est probablement dans la bouche de Hariçikha.

यस्त्वया घटितो ऽनर्घः स्वामिनो जीवतः सुखम् ।
स्वामिन्या सह संयोगः सो ऽयमेवं विजृम्भते ॥ ९७ ॥
सो ऽब्रवीत्सो ऽयमायातो वादः संप्रति सत्यताम् ।
ज्वरिष्यामीति संचिन्त्य मण्डं पिबति मुण्डितः ॥ ९८ ॥
स कालस्तावदायातु स्वामिनी यद्विशङ्किता ।
तत्रैव विश्राम न्यस्तो पास्यामस्त्यज्यतां त्वरा ॥ ९९ ॥
अथ बालं प्रलापेन महीपालं तपन्तकः ।
विज्ञापयतु तेनास्य दत्तः पूर्वमयं वरः ॥ १०० ॥
अप्रसङ्गे ऽपि भवता कार्या विज्ञापना मयि ।
सिद्धिं यास्यति चावश्यं मा स्म भङ्गं करोदिति ॥ १०१ ॥
इतीमामनुकूलाभिर्वाग्भिराश्वास्य गोमुखः ।
मातुरेवानयन्मूलं प्राविशाम ततः पुरीम् ॥ १०२ ॥
कुमारवटकाख्येन मयानूक्तस्तपन्तकः ।
गोमुखेन यदाख्यातं तत्कार्यं साध्यतामिति ॥ १०३ ॥
तपन्तकस्तु सास्फोटमिदं सिद्धमिति ब्रुवन् ।
गत्वा राजकुलं तस्मादागत्येदमभाषत ॥ १०४ ॥
राजपादैरहं पृष्टस्तात किं क्रियतामिति ।
प्रावोनेन मयाप्युक्तं मोदको दीयतामिति ॥ १०५ ॥
एवं मालाफलादीनि निःसाराणि तपन्तकः ।
याचते स्म प्रहीणत्वाद्गत्वा गत्वा महीपतिम् ॥ १०६ ॥

. . . . . . . . . . . . . . .

97. patitau *n* ghaṭitau *m;* sayogaḥ B. — 99. saṃkālas *n;* yatavisaṃkato (-to *paraît corrigé en* -tā) B yataçaṃkatā *n* yataviçaṃkatā *m;* vidyamanyaṃcā B' vidyāmanyaṃcā B'*n* vidyāmamnyaṃcā *m;* dhāsyāmas, *peut-être* pāsyāmas B. — 100. vijñāpayitu. — 101. kāryo *nm;* saṃkāñ B. — 102. itīnām *n* itimām *m;* -ānayata B; praviçāma *nm;* purāṃ *nm.* — 103. mayātūktas *nm.* — 105. pṛṣṭhas B*n;* vīyatām *nm.* — 106. mālāhalādīni *n* molāhalādinī *m;* gatvā *om. m.*

98. Muṇḍitaḥ : «rasé» : maṇḍitaḥ des manuscrits est inacceptable pour le sens.
Maṇḍam : une décoction d'orge est le remède spécifique de la fièvre (*Suçruta*).

99. Pāsyāmas : dhāsyāmas peut s'entendre (de dhā-, dhayati); mais pāsyāmas, bien meilleur, est à peine une correction.

इति सशरीरया क्षणमिव क्षणदाः क्षपयन्
सह विशरीरया दयितया विरसान्दिवसान् ।
दिनरजनीविहारविपरीतमहं चरितै
रथचरणाह्वयस्य चरितानि विडम्बितवान् ॥ १०७ ॥

इति श्लोकसंग्रहे मदनमञ्जुकालाभः ॥ ११ ॥

107. carite B[1]; ratharacaṇāhvapasya B; vibhūṣitavān *nm.*

iti *om.* B.

---

107. Sa vie ressemble à celle du cakravāka, mais c'est le jour que le cakravāka est heureux (cakrabāndhava = soleil, *Hem.*, *Abhidh.*, 96), il pleure la nuit (cakrabhedinī = nuit, *ibidem*, çeṣa 17); au rebours Naravāhanadatta (-viparītam).

Rathacaraṇa (cf. *P. W.*) = rathāṅga = cakravāka.

Mètre : narkuṭaka ou avitatha.

# XII

अथ मां कृतकर्तव्यं सुखासीनमहर्मुखे ।
वादी जित इवाच्छायस्त्रपया गोमुखो ऽब्रवीत् ॥ १ ॥
अहमर्यसुतां नीत्वा गृहं स्वगृहमागतः ।
ततो ऽपि वन्दितुं देव्यौ नरेन्द्रान्तःपुरं गतः ॥ २ ॥
वन्दिता च विहस्याह देवी पद्मावती यथा ।
किंकारणं वधूरद्य नास्मानायाति वन्दितुम् ॥ ३ ॥
भ्राता ते किं न सुप्तैव न वाद्यापि विबुध्यते ।
कोपिता वा भवेद्भर्त्रा शिष्टा दुश्चरितैरिति ॥ ४ ॥
अथागता हतोरस्का क्रन्दन्ती पद्मदेविका ।
नास्ति नः स्वामिनीत्युक्त्वा देव्योर्निपतिता पुरः ॥ ५ ॥
ततो देव्यौ ततः शेषमशेषमवरोधनम् ।
राजा च श्रुतवृत्तान्तः सास्थानो धैर्यमत्यजत् ॥ ६ ॥
ततः प्राप्याचिरात्संज्ञां मागध्या पद्मदेविका ।
कथं जानासि नास्तीति पृष्टाचष्ट निशाम्यताम् ॥ ७ ॥
यथैव गोमुखेनासौ स्वमावासं प्रवेशिता ।
तथैव झगिति घ्रातो गन्धो ऽस्माभिरमानुषः ॥ ८ ॥
अकस्माच्च क्षणं निद्रां गच्छामः प्रतिबुध्य च ।
मन्यामीक्षामहे शय्यामश्रीकां नलिनीमिव ॥ ९ ॥

1. trayayāgomukhobhavat *nm.* — 2. *nm répètent la fin de 2 ainsi : . . .* gataḥ ‖ vadi(vaṃdi *m*)devyaunarendrāṃtaḥpuraṃgataḥ. — 3. karaṇaṃ B *ex* kāraṇaṃ; bhrātā *n.* — 4. kopito *nm;* bhartā; si . . (?) (*grattage*) B[1] çiṣṭyā B[2]*m;* duçcaritairapi *nm.* — 6. māsthāno *nm.* — 7. prāyā- B prāpā- *nm.* — 8. pravesitā B; jhagati *nm.* — 9. asmācca B[1] : īkṣyāmahe *nm.*

4. **Bhrātrā** : Naravāhanadatta. Il appelle souvent par amitié Gomukha son frère (voir l'épisode XX, 261-292); Udayana appelle les quatre fils des ministres ses fils (XV, 44-45).

8. **Amānuṣaḥ** : « divin ».

ततो हा हेति विक्रुश्य समूर्छाः क्षणमास्महे ।
न क्वचिच्च विचिन्वत्यः पश्यामः स्वामिनीमिति ॥ १० ॥
कलिङ्गसेनया चैव शोकगद्गदयोदितम् ।
इदं तदागतं मन्ये दुर्विद्याधरचेष्टितम् ॥ ११ ॥
बालिकामहमादाय पूर्वं मदनमञ्जुकाम् ।
हर्म्याग्रे क्रीडयामि स्म चन्द्रिकासङ्गशीतले ॥ १२ ॥
एहि विद्याधरा३ एहि गृहाणेमां सुरूपिकाम् ।
एकामेव मया लब्धां सुतां दुर्लभिकामिति ॥ १३ ॥
ततश्चर्मासिकेयूरहारादिकरभासुरः ।
अवातरद्दिवः कोऽपि दिव्यगन्धस्रगम्बरः ॥ १४ ॥
दूरादेव च मां भीतां मा भैषीरिति सान्त्वयन् ।
गम्भीरध्वनिविस्रस्ततनयामिदमब्रवीत् ॥ १५ ॥
यदि मह्यमियं दत्ता सत्येन तनया त्वया ।
ततो मुञ्च नयाम्येनां न्यासभूता हि कन्यका ॥ १६ ॥
नाम्ना मानसवेगोऽहं विद्याधरगणाधिपः ।
सर्वविज्ञेयविज्ञानमनोज्ज्वलितधीरिति ॥ १७ ॥
अनिच्छन्ती ततस्तस्य संनिधौ चिरमासितुम् ।
प्रयत्नाद्धैर्यमाधाय प्रगल्भेव तमब्रवम् ॥ १८ ॥
अर्हत्यवश्यमेवेयमीदृशी त्वादृशं पतिम् ।
न पुनर्दीयते तावद्बालिका शैशवादिति ॥ १९ ॥
अथ मामभिवाद्यासावुल्कासंघातभासुरः ।
दृश्यमानो महावेगः क्षणेनान्तर्हितोऽभवत् ॥ २० ॥
तेन ब्रवीमि तेनाद्य तत्स्मृत्वा क्षुद्रबुद्धिना ।
विद्याधराधमेनासौ नीता यदि भवेदिति ॥ २१ ॥
सर्वथा दृश्यते नेह देवी मदनमञ्जुका ।
यदत्रानन्तरं न्याय्यं तदनुष्ठीयतामिति ॥ २२ ॥

10. vicinvaṃtyaḥ *nm.* — 12. sītale B. — 13. vidyādharo B[1] vidyādharā B[2] *nm.* — 16. dantā B[1]. — 17. -vegoha B. — 18. pragabheva B. — 19. dīyate-tāṃcabālikā *n.* — 20. māṃmabhi- B. — 21. bravīti *m.*

13. Vidyādharā3 : pluti de la dernière syllabe d'un vocatif (pluta udāttac ca vyāhāraḥ, comme il est dit XVIII, 187).

22. Ce vers est dans la bouche de Gomukha; c'est la conclusion de son rapport à Naravāhanadatta.

ततः समुत्पतन्नेव शोकः क्रोधेन मामकः ।
प्रेरितः पवनेनेव प्रबलेन बलाहकः ॥ २३ ॥
स्त्रीतस्कर दुराचार मूढ मानसवेगक ।
तिष्ठ तिष्ठ क्व यासीति प्रालपं गगनोन्मुखः ॥ २४ ॥
युगपत्क्रोधशोकाभ्यां शोषितो ऽहं क्रमेण च ।
यथानिलतुषाराभ्यां शिशिरे कमलाकरः ॥ २५ ॥
गोमुखस्तु नृपाहूतः प्रत्यागत्येदमब्रवीत् ।
किमेतदिति पृष्टेन वृत्तान्तो ऽयं मयोदितः ॥ २६ ॥
ततः संभ्रमविस्रस्तमाकर्षन्नुत्तराम्बरम् ।
विषादाकुलितो राजा प्रस्थितो युष्मदन्तिकम् ॥ २७ ॥
अन्तरे च रुमण्वन्तमाह केयं प्रमादिता ।
सर्वथा ख्यापितं लोकैर्भवतां नीतिकौशलम् ॥ २८ ॥
युक्तं तदा यदालोच्य महत्सीदत्प्रयोजनम् ।
विप्रलब्धो ऽस्मि युष्माभिर्देव्या वासवदत्तया ॥ २९ ॥
अधुना ध्रियमाणे ऽपि समर्थसचिवे मयि ।
अपनीता वधूः कस्माद्बालान्मम सुतादिति ॥ ३० ॥
स तमाह निवर्तध्वमलं तत्र गतेन वः ।
युष्मान्दृष्ट्वा हि स शिशुः प्राणानपि परित्यजेत् ॥ ३१ ॥
आज्ञापयत मां यच्च यत्र विज्ञापयामि वः ।
आसीनानासने तेन निवृत्य स्थीयतामिति ॥ ३२ ॥

24. prālapan B vegakaḥ; -prālayan *nm.* — 26. pṛṣṭhena B*n.* — 28. prasāditā *nm.* — 29. yusmābhir B. — 30. priyamāṇe B[1]*n* vriyamāṇe *m.* — 31. nivartaçvam *n* nivartaçcam *m;* çisuḥ B.

28-29. Allusion à l'incendie où Vāsavadattā fut censée avoir trouvé la mort (cf. *K.S.S.*, XV-XVI et *Svapnavāsavadatta* de *Bhāsa*) : Udayana soupçonne, à tort d'ailleurs, qu'on a pu faire disparaître Madanamañjukā, comme on avait autrefois caché Vāsavadattā, pour des raisons de politique. Il parait avoir encore sur le cœur le rôle de dupe qu'il a joué en la circonstance. Les allusions sont précises : le grand dessein (mahat prayojanam) dont il est question est celui de reprendre Kauçāmbī enlevée par Āruṇi (cf. VII, 67-68); adhunā dhriyamāṇe souligne la différence entre sa situation actuelle et ses misères de roi détrôné (voir *J. As.*, XI, XIII (1919), pp. 511 et suivantes). Noter qu'ici Udayana attribue la machination à Rumaṇvat et non à Yaugandharāyaṇa, qui en fut le véritable auteur. Il est possible que par bhavatām il faille entendre tous les ministres.

[XII]



उपविष्टाय चाचष्ट स्फुटं दिव्येन सा हृता ।
अनाथापि न वः काचित्केनचित्परिभूयते ॥ ३३ ॥
यावदन्तःपुराटव्यौ यावच्च गृहपक्षिणः ।
नास्त्यसौ यो न चास्माभिरीक्षितश्चारचक्षुषा ॥ ३४ ॥
आकाशे तु न मे प्रज्ञा क्रमते दिव्यगोचरे ।
तेन विद्याधरेणासौ हृतेति हृदये मम ॥ ३५ ॥
अथ वा भवतूद्याने युवराजः परीक्षताम् ।
कदाचित्कुपिता भर्त्रे तत्रासीत वधूरिति ॥ ३६ ॥
कुपितानां हि भर्तृभ्यः श्रूयन्ते कुलयोषिताम् ।
साधुभिः कथ्यमानानि पञ्च स्थानानि तद्यथा ॥ ३७ ॥
श्वश्रूभ्रातृननान्दृणां भर्तृमित्रस्य वा गृहम् ।
दुष्टसंचारशून्यानि मन्दिरोपवनानि वा ॥ ३८ ॥
अत्रान्तरे कथितवानाख्यानं मरुभूतिकः ।
प्रस्तावे यन्मया पूर्वं श्रुतं तदवधीयताम् ॥ ३९ ॥
अष्टावक्रस्य दुहिता सावित्री नाम कन्यका ।
आसीद्या चरिताकारैः सावित्रीमतिरिच्यते ॥ ४० ॥
अष्टावक्रमयाचिष्ट कदाचिदृषिरङ्गिराः ।
ब्रह्मन्नद्यतदारो ऽस्मि सुता मे दीयतामिति ॥ ४१ ॥
सो ऽब्रवीद्भवतः को ऽन्यस्त्रैलोक्ये ऽपि वरो वरः ।
किं तु दत्तेयमन्यस्मै क्षमतां भगवानिति ॥ ४२ ॥
तस्य भ्राता वृषो नाम स चाङ्गिरसमब्रवीत् ।
अमृता नाम दुहिता मम सा गृह्यतामिति ॥ ४३ ॥

33. athānāthāpi B[1]; nacaḥkācit *nm.* — 34. aṭavyāṃ *nm*; yonayasmābhir B[1] yonayuṣmābhir *nm.* — 38. svaçrū- B: -yātā- B[1] -pātṛ- *nm;* -nanaṃdṝṇāṃ B -nanādṛṇāṃ *n* -naṇāṃdṛṇāṃ *m.* — 39. prastāca *n* prastāva *m.* — 40. -kāraiḥ *sur grattage* B. — 41. aṣṭāvakramuyāciṣṭa B[1]; çrutā B[1] çutā B[2]. — 43. anṛtā *nm;* nāma *sur grattage de* māma B.

38. -nanandṝṇāṃ : nanandar (au lieu de nanāndar) est attesté par les lexiques (références dans *P.W.*).

40 et suivants. (*K.S.S.*, CV, 22-32; *B.K.M.*, XIII, 9-12) cf. 41 note.

41. Sutā : observer la faute çrutā de B (issue de la graphie çutā). Une faute semblable, dans la version cachemirienne de la *B.K.*, a dû tromper Somadeva qui appelle l'héroïne de ce conte Açrutā; Kṣemendra attribue son aventure à Sāvitrī elle-même, la rendant ainsi absurde. La *B.K.* cachemirienne ne devait pas nommer l'héroïne, ici Amṛtā.

परिणीय तु तां कन्याममृताममृतोपमाम् ।
आत्मानमङ्गिरा मेने पीतामृतमिवामृतम् ॥ ४४ ॥
सा कदाचित्कर्थचित्तं कार्ये ऽल्पे ऽपि पीडिता ।
उपालब्धवती नाथमृषिपुत्रस्य वल्लभा ॥ ४५ ॥
चक्षूरक्तेन भवता सावित्री स्वयमर्थिता ।
अहं त्वनिच्छते तुभ्यं पित्रा दत्ता बलादिति ॥ ४६ ॥
नानाविधैः स शपथैरमृतां परिसान्त्वयन् ।
कंचिदत्यनयत्कालमेकदास्तंगते रवौ ॥ ४७ ॥
पश्चात्संध्यामुपासीनमासीनं मौनधारिणम् ।
अपृच्छदमृतागत्य किं ध्यायति भवानिति ॥ ४८ ॥
तेन वन्दितसंध्येन चिरादुक्तं ननु प्रिये ।
देवीं विहाय सावित्रीं किमन्यच्चिन्तयाम्यहम् ॥ ४९ ॥
अथ सा श्रुतमित्युक्त्वा स्वस्मिन्नाश्रमपादपे ।
देवताभ्यो नमस्कृत्य शरीरमुदलम्बयत् ॥ ५० ॥
आकृष्टकण्ठपाशा च पुरः प्रैक्षत देवताम् ।
विद्युत्पिङ्गजटाभारां साक्षमालाकमण्डलुम् ॥ ५१ ॥
ततो दन्तप्रभाजालप्रभासिततपोवना ।
देवतावोचदमृताममृतेनेव सिञ्चती ॥ ५२ ॥
पुत्रि मा स्म त्यज प्राणान्दुस्त्यजान्धर्मसाधनान् ।
स्त्रैणमज्ञानमाश्रित्य संतुष्टो हि पतिस्त्वया ॥ ५३ ॥
नाष्टावक्रस्य दुहिता सावित्री तेन चिन्तिता ।
किं त्वहं ब्रह्मरुद्रादिसप्तलोकनमस्कृता ॥ ५४ ॥
सर्वथा मत्प्रसादात्ते पुत्रि पुत्रो भविष्यति ।
बलेन तपसा यस्य न समानो भविष्यति ॥ ५५ ॥

45. nātha- *sur grattage* B. — 46. cakṣu- *n;* anigacchate B[1] anicchane *nm.* — 47. atyanayat *nm;* -āstagate B -āstegate *nm;* ravo B[1]. — 48. dhyāyaṃti *nm.* — 49. devī *nm;* sāvitrī B[1] *nm;* anyaciṃta- *nm.* — 50. āsramapādaye B. — 51. pāsā B; prekṣata B[1] prekṣeta *nm;* -piṃgajabhārāṃ *n* -piṃjagabhārāṃ *m.* — 52. siṃcati *n.* — 55. prasādānte B.

49. Devīṃ : c'est ce mot qui cause l'erreur d'Amṛtā; il est souvent employé avec le sens de «madame».

इति दत्त्वा वरं तस्यै सावित्री दिवमाश्रयत् ।
अमृतापि गताशङ्का भर्त्रा सह समेयुषी ॥ ५६ ॥
तेन ब्रवीमि कुपिता कदाचिदमृतेव सा ।
उद्यानं प्रविशेत्तत्र स्वयमन्विष्यतामिति ॥ ५७ ॥
अथाहं शिबिकारूढः प्रविष्टो वेश्मस्मृतिः ।
चक्षुश्चेतोहराकाराः पश्यन्वेश्याः समूहशः ॥ ५८ ॥
आसीच्च मम देवीभ्यां प्रयोगो ऽयमनुष्ठितः ।
अपि नामास्य कस्यांचित्स्त्रियां भावो भवेदिति ॥ ५९ ॥
तदायं मोहसंकल्पो न हि संकल्पजन्मनः ।
रतेरन्यासु संकल्पः प्रमदासु प्रवर्तते ॥ ६० ॥
ततः संकल्पयन्नेवमचन्द्रकमिवाम्बरम् ।
कान्तामातुर्गृहं कान्तं कान्ताशून्यमुपागमम् ॥ ६१ ॥
प्रकाशानप्रकाशांश्च प्रदेशान् बहुशो बहून् ।
अन्विष्यन्तो भ्रमाम स्म न चापश्याम तत्र ताम् ॥ ६२ ॥
गोमुखोद्दिष्टमार्गश्च प्रविश्य गृहकाननम् ।
पृच्छामि स्म प्रियावार्त्तां साक्षिशाखामृगाण्डजान् ॥ ६३ ॥

56. tasmai *nm;* gatāsaṃkā B; bharttā B. — 57. amṛtaiva *nm;* tatrayasvayam B[1]. — 58. -ākārā; pasyanvesāsamūhasaḥ B yasyasvasāsamūhasaḥ *nm.* — 60. tadayaṃ B tadāya *nm.* — 61. acaṃdrakam *nm;* kāntaṃ *om.* B *add.* B[n]; sūnyam B. — 62. prakāsān B prakāmān *nm;* aprakāsāṃç B aprakāmāṃç *nm;* bahuso B; nacā- *ex* nucā- B navā- *nm.* — 63. -sākhāmṛgāṇḍajān B -çākhāmṛgāṇuvān *nm.*

56. Sameyuṣī : cet emploi d'un vieux participe parfait, pour n'être pas sans exemple dans le style poétique, est néanmoins remarquable. C'est un trait d'archaïsme, comme on en constate beaucoup dans notre texte, en ce qui concerne les formes verbales.

57. Amṛteva : «comme Amṛtā», c'est-à-dire pour un motif aussi futile; il ne veut pas dire que Madanamañjukā ait voulu se suicider.

58. Asmṛtiḥ : adjectif (à relever) : il les voit sans éprouver de sentiments pour elles; il se sait bon gré de cette indifférence car c'est la première fois qu'il entre dans cette maison; aussi pense-t-il qu'on a voulu l'éprouver.

Samūhaçaḥ : «en bloc», sans les détailler; -çaḥ s'ajoute à n'importe quel mot désignant une quantité.

60. Allusion à l'identification, mentionnée par le *K.S.S.*, de Naravāhanadatta avec Kāma et de Madanamañjukā avec Rati.

63. Sākṣi- : «témoins» (de la disparition de Madanamañjukā). On pourrait aussi songer à la correction çākhi- (cf. V, 148).

केभ्यश्चित्कुपितः शापान् केभ्यश्चिद्वितरन्वरान् ।
विडम्बयन्नशास्त्रज्ञमत्युत्कटरसं नटम् ॥ ६४ ॥
अथोपगम्य त्वरितः प्रहृष्टो मखभूतिकः ।
अर्यपुत्रार्यदुहिता मया दृष्टेत्यभाषत ॥ ६५ ॥
ततस्तस्य परामृश्य पाणिना विकसन्मुखम् ।
अपि सत्यमिदं सौम्य स्यात्क्रीडेत्यहमब्रवम् ॥ ६६ ॥
सोऽब्रवीत्सत्यमप्येतत्क्रीडा येषातिहर्षजा ।
असत्ये ह्यत्र या क्रीडा तदुन्मत्तविजृम्भितम् ॥ ६७ ॥
अथ बालं विमर्शेन महाभ्युदयवैरिणा ।
त्वरितं गम्यतां यस्मान्नार्तः कालमुदीक्षते ॥ ६८ ॥
पश्यामि स्म ततो गच्छन्नशोकशिशुमग्रतः ।
रक्तं कुसुमसंघातमयमाभूमिपल्लवम् ॥ ६९ ॥
अकाले किमशोकस्य कुसुमानीति चिन्तयन् ।
तस्य स्कन्धे प्रियालीनामपश्यं प्राणदायिनीम् ॥ ७० ॥
आसीच्च मम किं चित्रं यत्पादस्पर्शदोहदः ।
सद्यः कुसुमितोऽशोकः प्राप्य सर्वाङ्गसंगतिम् ॥ ७१ ॥
इदमत्र महच्चित्रं यदालोकितमेतया ।
वनदेवतयोद्यानं सकलं न विजृम्भितम् ॥ ७२ ॥
सर्वथाचेतना वृक्षाः कान्ताया दर्शने सति ।
सुभगे निर्विकारत्वादङ्गारतुषभस्मवत् ॥ ७३ ॥
अथालिङ्गितुमारब्धः सानुरागमहं च ताम् ।
तया चाङ्गानि संहृत्य मा तावदिति वारितः ॥ ७४ ॥

64. kebhyaççatkupitaḥ B kebhyaççakrudhitaḥ *nm;* vitarat; karāt *nm;* ajñāstrajñam *m;* atyatkaṭa- B[1] atyutkatha- *m.* — 65. abhāṣat B. — 66. pāninā B; vilasatsukhaiḥ *nm;* somya B[1]; abruvam B[2]*nm.* — 67. yeṣā B; asatyaṃ *nm;* unmakracijṛṃbhitaṃ *n* unmakravijṛṃmita *m.* — 68. vimardeṇa B vimardena *nm;* udīkṣite *n.* — 69. tataḥ sarvann *nm;* asoka B; raktakusuma-. — 71. sparṣa B. — 73. sarvathā acetanā B; çati B; nirvicāratvād *nm;* tupa *nm.* — 74. itivārit B ativārivat *nm.*

64. L'auteur paraît songer à Purūravas qui, dans *Vikramorvaçī*, interroge sur sa bien-aimée perdue paon, coucou, montagne, fleuve, gazelle, etc.

ततः प्रसरभङ्गेन विलक्षमुपलक्ष्य माम् ।
साब्रवीदपरोधो ऽयमर्यपुत्रेण मृष्यताम् ॥ ७५ ॥
आराधितवती यक्षमहं कन्या सती यथा ।
अर्यपुत्रस्य भूयासं दयिता परिचारिका ॥ ७६ ॥
तुभ्यं कार्ये च संसिद्धे शमीलाजसुगन्धिना ।
पानं हस्तेन दास्यामि प्रसीदतु भवानिति ॥ ७७ ॥
स च तस्य प्रसादान्मे यातः सिद्धिं मनोरथः ।
आयाचितं तु यक्षाय न मया प्रतियाचितम् ॥ ७८ ॥
तेनाहं पानशौण्डेन नीता धनपतेः सभाम् ।
वृत्तान्तः कथितश्चायमथोक्तो धनदेन सः ॥ ७९ ॥
आयाचितमियं तुभ्यमचिरेणैव दास्यति ।
नीत्वा समर्पय क्षिप्रं दारकाय वधूमिति ॥ ८० ॥
तेन चाहमिहानीता गगनागमनाच्च मे ।
शरीरं पक्षीभूतं वारिता स्म ततो भया ॥ ८१ ॥
. . . . . . . . . . . . . . . . . . . . . . . . . . . ।
तस्मै यक्षाय युष्माभिः स मे संपाद्यतामिति ॥ ८२ ॥
अथास्यै गणिकाध्यक्षो राजादेशं न्यवेदयत् ।
अद्यारभ्य कुलस्त्रीत्वं भवतीनां भवत्विति ॥ ८३ ॥

75. upalakṣamāṃ B upalakṣaṇaṃ *nm;* aparādho *nm.* — 76. paricārakā B. — 77. tulyaṃ *nm;* samī. — 78. yakṣoya B. — 79. panayataḥsabhā *nm.* — 81. ihānītā *ex* inānītā B; vāritākṣa *nm;* talobhayā *n* talomayā *m.* — 82. *La lacune n'est pas signalée par les mss. : il manque évidemment un demi-çloka;* yuṣmābhiḥ B. — 83. -āsye B[1]; -ādesaṃ B; bhatviti B[1].

75. Aparodho : il n'est pas nécessaire de lire aparādho avec *nm.* Le mot aparodha est vieilli mais il fournit ici un bon sens : «le fait de repousser».

77. Çamilājasugandhinā... etc. : c'est-à-dire de lui faire boire une coupe à l'occasion des fêtes de son mariage; elle n'a pas pu tenir sa promesse parce que ce dernier n'a pas été célébré rituellement, et il ne saurait l'être tant que Madanamañjukā n'est qu'une gaṇikā.

78. Pratiyācitam : yāc- nouveau avec prati-; tout le sens ici est dans le préverbe (comme pour prati-iṣ- «recevoir, accepter *en retour*»).

82. Il faut admettre une lacune d'un demi-çloka où se trouvait l'antécédent de sa. Le moyen de la mettre en état d'accomplir son vœu est de l'épouser selon les rites (cf. 77 et 80). La fin est brusque : il n'est pas impossible qu'il manque quelque chose entre 82 et 83.

तं यावद्यं महामनोरथमिदं पूर्वं चिरात्काङ्क्षितं
मेव प्रीतिनिकायविहारिहचितं धत्ते च कान्ता सुखम् ।
याञ्चावृत्तिवदर्पितैर्वलजिरप्राप्तैर्न हि प्रार्थकाः
प्रीतिं यान्ति तथा यथा तनुभिरप्यर्थैः सुखाभ्यागतैः ॥ ८४ ॥

इति वेगवतीलाभे उद्याननिमयो नाम द्वादशः सर्गः ॥ १२ ॥

84. sukhaṃ *nm;* -āgateḥ B[1].

iti *om.* B; nicayo B niyamo *n* nivayo *m;* dvādaça B.

84. Idaṃ employé adverbialement. C'est un archaïsme.

Mètre : çārdūlavikrīḍita.

Colophon : -lābhe : pas de saṃdhi : il faut ponctuer après -lābhe.

Udyānanimayo : on pourrait songer (d'après B) à la correction vicayo «recherche»; mais nimayo (d'après *n*, où la faute niyamo doit venir d'une interversion de caractères) vaut mieux; sens : «substitution»; en effet une fausse Madanamañjukā a été substituée à la vraie.

# XIII

ततो दिवसमासित्वा कान्तामातुरहं गृहे ।
प्रियां नववधूवेषां प्रदोषे परिणीतवान् ॥ १ ॥
प्रसादादर्यपादानां कुलस्त्रीत्वमुपागताम् ।
तामादाय स्वमावासं प्रवृत्तोत्सवमागमम् ॥ २ ॥
तत्र सा सधनाध्यक्षं तं यक्षं कुसुमादिभिः ।
अभ्यर्च्य पानदानेन सुहृल्लोकमतोषयत् ॥ ३ ॥
पद्मरागमयीं शुक्तिं पद्मरागद्रवत्विषः ।
आदाय मधुनः पूर्णां ततो मामब्रवीत्प्रिया ॥ ४ ॥
मङ्गलानां प्रधानत्वात्कार्यसंसिद्धिदायिनी ।
एषा धनपतेः शेषा स्वादुरास्वाद्यतामिति ॥ ५ ॥
मयोक्तमननुज्ञातस्तातपादैर्गुणानपि ।
नाहं सेवितुमिच्छामि किं पुनर्व्यसनं महत् ॥ ६ ॥
ततः सा दृढसंरम्भा शपथैरव्यतिक्रमैः ।
चिरान्निरुत्तरीकृत्य मामनिच्छुमपाययत् ॥ ७ ॥
पीतैकमधुशुक्तिं च मां सापृच्छत्कृतस्मिता ।
किमास्वादमिदं पानमिति प्रत्यब्रवं ततः ॥ ८ ॥

3. yakṣaṃ B : paṃtaṃ *nm;* abhyarcya B anyebhyaḥ *nm.* — 4. suktiṃ B: sapunaḥpūrṇaṃtito *nm.* — 5. svādurāsādyatām B svādumāsādyatām *nm.* — 6. ananujñātaṃ *nm;* nānapādair *n* nānapādau *m.* — 7. apyatikramaiḥ *nm;* cirāṃ B; anicchamapāṣayat *nm.* — 8. pratyabruvaṃ *m.*

2. Aryapādānāṃ : aryapāda (cf. V, 282 pour arya-) ou āryapāda — au pluriel —, formule respectueuse pour désigner une personne auguste, ici le roi.

4. Çuktiṃ : cf. II, 29 et les références indiquées *ibidem.*

5. Svādur āsvādyatām : çeṣā se rapporte au mot çukti sous-entendu. Il faut admettre svādu féminin, ce qui ne laisse pas d'être inquiétant.

Āsvādyatām donne un meilleur sens — bien qu'āsādyatām puisse à la rigueur s'entendre — et fournit une allitération qui explique l'emploi du mot svādu (cf. 12).

6. Avyatikramaiḥ : «auxquels on ne peut passer outre», adjectif.

आपाने मधुरास्वादमनुस्वादे तु तिक्तकम् ।
पश्चे कषायकटुकमवच्छेदे मनागिति ॥ ९ ॥
साब्रवीद्युक्तमद्यापि न जानीथ रसं पुनः ।
पीयतामिति पीतं च पुनस्तद्वचनान्मया ॥ १० ॥
इदं कीदृशमित्यस्यै पृच्छत्यै कथितं मया ।
किमर्थमपि मे चित्तं गतमस्वस्थतामिति ॥ ११ ॥
तयोक्तमपराप्येका शुक्तिरास्वाद्यतां ततः ।
गमिष्यत्यचिरादेव चित्तं ते स्वस्थतामिति ॥ १२ ॥
तस्यामपि च पीतायामपश्यं वेगवद्भ्रमान् ।
तत्प्रासादशैलादीन् स्थावरानपि जङ्गमान् ॥ १३ ॥
यथा चाहं तयोपायैर्ग्राम्यैः शपथादिभिः ।
अनिच्छन् पायितः पानं तथा तामप्यपाययम् ॥ १४ ॥
बलवद्भ्यामथाक्रम्य मदेन मदनेन च ।
यदेव रुचितं ताभ्यां तत्रैवास्मि प्रवर्तितः ॥ १५ ॥
यः संतोषयितुं यत्नं विवाहः कृत्रिमः कृतः ।
तेन कृत्रिममेवासौ कन्यात्वं प्रतिपादिता ॥ १६ ॥
ततः प्रातरुपागम्य मधुगन्धाधिवासितम् ।
घ्रात्वा हरिशिखो वेश्म संभ्रान्तमतिरुक्तवान् ॥ १७ ॥
अपूर्व इव गन्धो ऽयमर्यपुत्र विभाव्यते ।
मन्ये ऽर्यपुत्रया यूयमनिच्छवः पायिता इति ॥ १८ ॥
स मयोक्तः सखे सख्या तवाहं पायितो बलात् ।
भवतापि रुचौ सत्यां स्थीयतां पीयतामिति ॥ १९ ॥

9. anusvāhe B anutvāde *m;* kayāya *n* kathāya *m.* — 10. jānīta B jānītam *nm.* — 11. aiçvaryatāmiti *nm.* — 12. āsvādyatāntatataḥ B; svacchatām *nm.* — 13. apasyam B; -selādīn B[1] -sailādīn B[2]. — 14. sapathādibhiḥ B. — 16. -āmau *nm.* — 17. vesma B. — 18. manye arya- B manyarya- *nm;* pāyitāmapi *nm.* — 19 *om. nm;* satyāsthīyatā B.

9. Anusvāde : conjecture; le mot est nouveau mais très simplement formé; il signifierait le goût qui se révèle à la suite de la première impression, laquelle est trompeuse.

10. Na jānītha : comme on ne peut songer à jānīta impératif, on n'a le choix qu'entre najānīta (imparfait) et na jānītha (présent). L'imparfait ne serait pas employé ici en conformité avec les usages classiques.

12. Svasthatām : s'il ne valait mieux admettre cette leçon, à cause de asvasthatām du vers précédent (aiçvaryatām de *nm* étant impossible), la leçon svacchatām de *nm*, «lucidité», donnerait un sens excellent.

18. Aryaputrayā : féminin remarquable.

सो ऽब्रवीद्ब्रह्मन्ग्रामग्रामण्यं भवतामपि ।
पानं साधु न पश्यामि किं पुनर्मन्त्रिणामिति ॥ २० ॥
अथोक्तमर्थपादेषु समिद्धेषु समाश्नतम् ।
पालयत्सु किमस्माकमात्मभिर्वञ्चितैरिति ॥ २१ ॥
तेनोक्तं मन्त्रिसचिवैर्विज्ञाप्यं कार्यमागतम् ।
अनुष्ठाने पुनस्तस्य स्वातन्त्र्यं स्वामिनामिति ॥ २२ ॥
तं पिबन्तं सहावाभ्यामालोक्य मरुभूतिकः ।
निःशङ्कः पातुमारब्ध तं च दृष्ट्वा तपन्तकः ॥ २३ ॥
राजमानस्ततो रक्तैरङ्गरागस्रगम्बरैः ।
पुनरुक्तप्रियालापो मामवन्दत गोमुखः ॥ २४ ॥
तमत्यासन्नमासीनमतिमात्रप्रियंवदम् ।
पादौ संवाहयन्तं मे क्रुद्धो हरिशिखो ऽब्रवीत् ॥ २५ ॥
उन्मत्त किमसंबद्धं भाषमाणः पुरः प्रभोः ।
उद्वेजयसि भर्तारमपसृत्यास्यतामिति ॥ २६ ॥
तेनोक्तं मूर्ख नैवेदं मदसामर्थ्यजृम्भितम् ।
स्वामिनो निःसपत्नौ तु पादाविच्छामि सेवितुम् ॥ २७ ॥
यदा तूभयवैतर्द्धभर्तृमूर्धभिरर्चितौ ।
भविष्यतस्तदास्माकं ससपत्नौ भविष्यतः ॥ २८ ॥

20. 20 ab *om. nm;* grāmaṇya B. — 21. samāsatam B samāçanaṃ *nm;* ātmabhivañcitair B. — 23. nissaṅkaḥ B niḥsaṃka *n* niḥsaṃkaḥ *m;* ārabdha *sic* B ārabdhaṃ *nm.* — 24. *A partir d'ici, jusqu'à* XVIII, 87, *deux manuscrits seulement,* B *et m;* raktar *m;* aṃbaraḥ *m.* — 26. durmatta B*;* pura B; upasṛtyā- *m;* -āsatām. — 27. mū-navedaṃ *m.* — 28. yadābhūyavaitarddha- *m;* mūrddharir *m.*

20. Grāmaṇyaṃ : masculin, malgré pānam neutre; grāmaṇī est ici substantif.

23. Ārabdha : 3ᵉ pers. s. aor. ā-rabh-: cf. IX, 1.

28. -vaitarddha- (même mot 29) : je préfère ne rien changer à l'orthographe -rddha- des mss. Ce mot nouveau, que je traduis par «plateau (du Himālaya)» est un synonyme de vedyardha et désigne les deux régions du Himālaya où demeurent les Vidyādharas. La correction en vedyardha serait paléographiquement peu de chose mais il ne faut pas la faire puisque vitardi et vitardikā («terrasse») sont attestés par des textes et vitardī, vitarddhi, vitarddhī, vitarddhikā (même sens) par divers lexiques (voir *P.W.* s. u.). Le vaitarddha du Nord, au delà du Kailāsa, a pour chef Mandaradeva, le vaitarddha du Sud, en deçà du Kailāsa, a pour chef Gaurimuṇḍa dont le vassal est Mānasavega (*K.S.S.*, CVII-CX). Gomukha a flairé une imposture dans l'histoire du vœu fait à un yakṣa; il emploie ici à dessein un terme rare et technique pour inciter la fausse Madanamañjukā à se démasquer (cf. 29-



IMPRIMERIE NATIONALE.

वैतर्द्धनामग्रहणात्ततो मदनमञ्जुका ।
स्मितसंदर्शितप्रीतिरब्रवीत्साश्रुलोचना ॥ २९ ॥
अहो चातुर्यमाधुर्यप्रधानगुणभूषणाः ।
आलापा निर्गताः सौम्याद्गोमुखस्य मुखादिति ॥ ३० ॥
मयोक्तं भण पृच्छामस्त्वया कस्माच्चिरं स्थितम् ।
को वा तवेदमाकारमुज्ज्वलं कृतवानिति ॥ ३१ ॥
तेनोक्तं वयमाहूय मागध्या राजसंनिधौ ।
आज्ञापितास्तव भ्राता पानमासेवितं निशि ॥ ३२ ॥
तेन पानगृहात्पानं स्वाद्यमानं स्वदेत यत् ।
स्वयमास्वाद्य तन्मात्रे त्वया प्रस्थाप्यतामिति ॥ ३३ ॥
सो ऽहं देवीद्वयेनापि मण्डयित्वा स्वपाणिभिः ।
पानागाराय गमितः पानाध्यक्षपुरःसरः ॥ ३४ ॥
तत्र चास्वादयन्नेव तत्तत्पानं मनाग्गुणात् ।
मत्तो ऽहं प्रेषयामि स्म युष्मभ्यमपि संततम् ॥ ३५ ॥
तस्मात्पिबत निःशङ्काः कापिशायनमासवम् ।
अनुज्ञाताः सहामात्यैर्गुरुभिर्मुदितैरिति ॥ ३६ ॥
सेवमानस्ततः पानं सकान्तामिव मण्डपः ।
दिवसान्गमयामि स्म प्रहृष्टपरिचारकः ॥ ३७ ॥
कदाचिदेकपर्यङ्कस्थिता मदनमञ्जुका ।
युष्माभिः सुखसुप्ताहं न द्रष्टव्येत्यभाषत ॥ ३८ ॥
मम स्वामीत्किमित्येषा निवारयति मामिति ।
यतस्त्वं सुतरां चेतः कुतूहलतरंगितम् ॥ ३९ ॥

29. -grahaṇātato B. — 30. *Ce vers commence dans* B *par les mots* sohaṃdevīdvayenāpi maṇḍayitvā | (*cf.* 34) *biffés* (*par* B[1], *semble-t-il*); vāturyya- *m;* nirgatā B ṇirgatā *m* saumyāgo- *m;* sukhād *m.* — 31. mayokta-ṇa *m;* ujvalaṃ. — 32. ajñāpitas. — 33. vadenayat *m;* taddhātre *m.* — 34. pāṇā-; gamita B; pāṇā-. — 35. yusmabhyam B. — 36. nihsaṅkāḥ B; kāpisā-; anujñātaççasahā-. — 37. saivamānais *m;* -paricārataḥ. — 38. yusmābhiḥ B.

30): la vraie, en effet, ne comprendrait pas.

Sasapatnau : sasapatna (mot nouveau, sans difficulté) est le contraire de niḥsapatna (27).

29. Vaitarddhanāmagrahaṇāt : «parce qu'il avait employé le terme vaitarddha».

La joie de Madanamañjukā, c'est-à-dire de Vegavatī, sera expliquée XIV, 108 et suivants (cf. 28).

32 et suivants : Gomukha ment : c'est lui qui a imaginé d'enivrer le prince et sa femme pour provoquer l'incident qui sera relaté v. 38 et suivants.

कदाचिदर्धरात्रेऽहं स्थावरागारवङ्गमे ।
पाने परिणतिं याति प्रतिबुद्धः पिपासितः ॥ ४० ॥
ततः परिजनं दृष्ट्वा प्रसुप्तममवद्यम् ।
न युक्तं सुखसुप्तस्य शंभोरपि विबोधनम् ॥ ४१ ॥
भार्यां पुनः शरीरार्धमतो मदनमञ्जुकाम् ।
प्रतिबोध्य जलं याचे तद्धि मे न विरूप्यते ॥ ४२ ॥
इति निर्धार्य तस्यां च मया दृष्टिर्निपातिता ।
यावदन्यैव सा कापि नारीरूपेव चन्द्रिका ॥ ४३ ॥
आसीच्च मम किं यक्षी किं गन्धर्वी किमप्सराः ।
मानुषी स्यात्कुलस्त्री स्याद्गणिका स्यादियं न हि ॥ ४४ ॥
यस्मादन्यतमाप्यासां लक्षणैर्नोपपद्यते ।
तस्माद्विद्याधरी प्राप्ता कापि केनापि हेतुना ॥ ४५ ॥
इति निर्णीय निपुणं करिणीतालुकोमलौ ।
गाढं संवाहयामि स्म तस्याश्चरणपल्लवौ ॥ ४६ ॥
सा तु संत्याजिता निद्रां सव्यथश्चरणपीडया ।
मामालोक्य तथाभूतं भीता भूमावुपाविशत् ॥ ४७ ॥
अब्रवीच्च न कर्तव्यमार्यपुत्रेण साहसम् ।
त्वादृशामनुकम्प्यो हि बलिनां प्रमदाजनः ॥ ४८ ॥
ततः श्रुत्वेति यत्सत्यमात्मन्येवास्मि लज्जितः ।
एवंकारिणमप्येषा संभावयति मामिति ॥ ४९ ॥
सा मां लज्जितमालोक्य जानुसंनिहिताननम् ।
लज्जामपहरन्तीव त्वरितेदमभाषत ॥ ५० ॥
श्रूयतां चाप्रियं सा ते प्रिया मदनमञ्जुका ।
त्वद्गुणस्मरणव्यग्रा नयते दिवसानिति ॥ ५१ ॥

43. nidhārya *m;* kapi *m;* -rūpaiva *m.* — 44. gāndharvā B gandharvā *m;* syāddipannahi B. — 46. nipunaṃ B; karaṇī; pallavāṃ *m.* — 49. ātmanauvā- (?) *ou* ātmanyaivā- B. — 50. abhāṣita B. — 51. māte *m.*

42. Virūpyate : virūpay- au passif, «être choquant, laid».

43. Ca...yāvat marque simultanéité.

46. Kariṇī- : je ne vois d'autre moyen que cette correction pour aboutir à un sens; la comparaison qui nous paraît peu naturelle est moins étrange aux yeux d'un lecteur indien : pour faire l'éloge d'une jolie main de femme l'auteur dit qu'elle est «ibhatālutāmram», XVIII, 306.

50. Jānusaṃnihitānanaṃ : pour se représenter son attitude il faut se rappeler qu'il n'était pas debout mais couché ou assis sur un sofa.

आसीन्मे मनसि हृता न सा मृता सा
या दृष्टेर्व्रजति न गोचरं प्रिया मे ।
ज्योत्स्ना हि स्फुटधवलापि कौमुदीन्दोर्
अन्धानां बहलतमोमलीमसैव ॥ ५२ ॥

इति वेगवतीदर्शनो नाम त्रयोदशः सर्गः ॥ १३ ॥

52. nasāhṛtā B; mṛtāsāḥ *m*.

iti *om.* B; nāmastrayoçasarggaḥ B.

52. Mètre : praharṣaṇī.

# XIV

## I

ततस्तामब्रवं भीरु त्वमेव हि मम प्रिया ।
तथापि तु विनोदेन तिष्ठामः कथ्यतामिति ॥ १ ॥
ग्रहीतव्यानि नामानि गुरुदेवद्विजन्मनाम् ।
यस्मात्तेन विमुग्धार्थं स्वागमाचरितं तया ॥ २ ॥
अस्ति मेरुगिरिप्रांशुराषाढो नाम पर्वतः ।
शूरपण्डितवित्ताढ्यविद्याधरकुलालयः ॥ ३ ॥
तत्र विद्याधरस्वामी वेद्वान्वेगवानिति ।
यः कुबेराधिकस्वो ऽपि निःस्व एव दिनात्यये ॥ ४ ॥
तस्यापि पृथिवी नाम महिषी प्रांशुवंशजा ।
तृणाय मन्यते स्वैर्याद्या देवीं पृथिवीमपि ॥ ५ ॥
तौ च पुत्रमविन्दन्तौ चिरं दुःखमतिष्ठताम् ।
प्रौढाया इव कन्यायाः पितरौ सदृशं वरम् ॥ ६ ॥
तौ मनःपुत्रिकां नाम कुलविद्यां सुतार्थिनौ ।
आराधयितुमारब्धौ तया चोक्तं प्रसन्नया ॥ ७ ॥
सर्वविद्याधरोत्कृष्टविद्याधरपराक्रमः ।
भविता भवतोः पुत्रः पुत्रकौ दुःखमुज्झतम् ॥ ८ ॥
एका च दुहिता यस्याः कलाशाली भविष्यति ।
शूरः साङ्ग इवानङ्गो विद्याधरपतिः पतिः ॥ ९ ॥

1. abruvaṃ *m;* bhiṣṭāmaḥ *m.* — 3. prāṃsur B; nāmadyarvataḥ *m;* sūra B. — 4. nisva B. — 5. prāṃsuvaṃsa- B; devī B. — 8. bhavitāḥ B. — 9. sālī; sūraḥ B.

4. Dinātyaye : dinātyaya = pradoṣa. *Hem., Abhidh.*, çeṣa 19.

5. Tṛṇāya : l'attribut au datif avec manyate pour indiquer une nuance de mépris conformément à *Pāṇini*, II, 3, 17.

7. Kulavidyām : la «Science familiale» n'est pas autre chose que la *çakti* de l'enchanteur, premier ancêtre de la famille; elle porte le même nom que celui-ci (cf. 17).

काले क्वचिदतीते च प्रसूता पृथिवी सुतम् ।
चिवर्गमघतं देवी पृथिवीव सुरक्षिता ॥ १० ॥
मनःपुचिकया दत्तः स यस्मात्कुलविद्यया ।
तस्मान्मानसवेगाख्यः पुत्रः पित्रा प्रसाधितः ॥ ११ ॥
संवत्सरत्रये ऽतीते जाताया दुहितुः कृतम् ।
नाम वेगवतात्मीयमसौ वेगवती ततः ॥ १२ ॥
लब्धेष्टतनयौ तौ च मोदमानावहर्निशम् ।
नीतवन्तौ चिरं कालमेकाहर्निशसंमितम् ॥ १३ ॥
वेगवानेकदा स्नातः प्रीणिताग्निसुरद्विजः ।
भद्रासनस्थमात्मानं ददर्शादर्शमण्डले ॥ १४ ॥
अथ हंसमिवासीनमञ्जनाचलमूर्धनि ।
मृणालधवलं केशं दृष्टवानात्ममूर्धनि ॥ १५ ॥
ततो भद्रासनं त्यक्ता वसुधास्थण्डिले स्थितः ।
पृष्टो मानसवेगेन किमेतदिति वेगवान् ॥ १६ ॥
तेनोक्तं पलितं दृष्ट्वा मनःपुचिकवंशजाः ।
तपांसि वा निषेवन्ते वेदान्तविहितानि वा ॥ १७ ॥
तत्प्रजाः पालयेः पुत्र प्रजास्त्वां पालयन्तु च ।
पालितैर्हि मृगेन्द्रो ऽपि काननैरेव पाल्यते ॥ १८ ॥
अथ मानसवेगेन क्रोशन्तीषु प्रजासु च ।
राजा मन्दसुखोत्कण्ठः प्रतियातस्तपोवनम् ॥ १९ ॥
भर्त्रा निवर्त्यमानापि वचोभिः सोपपत्तिभिः ।
न निवृत्ता यदा देवी तदोपायं प्रयुक्तवान् ॥ २० ॥
अद्यैवाहं च्युतो राज्यादद्यैवेयं पतिव्रता ।
न मे संपादयत्याज्ञामहो धर्मः सतामिति ॥ २१ ॥
ततो ह्रीता च भीता च साश्रुश्रेणिः सवेपथुः ।
पादयोः पतिता पत्युर्व्यज्ञापयदसौ शनैः ॥ २२ ॥

10. sutām *m.* — 11. kalividyayā *m;* mānaṣavegākhyaḥ B mānaṣaveçādhyaḥ *m.* — 15. âtmamūrdhni B. — 16. tyaktā *m;* pṛṣtho *m.* — 17. vaṃsa- B; nisevante B. — 18. kāntair *m.* — 19. krosantīṣu B; mandamukho- B; pratiṣātas *m.* — 20. nirvartyamānā-. — 21. -veya B. — 22. sāsrusreṇi B sāçruçreṇi *m;* savepathu B; sanaiḥ B.

21. Aho : cette interjection marque, outre l'étonnement, une nuance d'ironie (cf. X, 80).

यदा तर्हि मया यूयं पावयन्तस्तपोवनम् ।
उपास्याः पावनतमं स कालः कथ्यतामिति ॥ २३ ॥
सोऽब्रवीद्दुर्लभं पुत्रं स्थिरसिंहासनासितम् ।
भर्तारं वेगवत्याश्च दृष्ट्वा द्रष्टासि मामिति ॥ २४ ॥
एवं चैवं च कल्याणि पिता विज्ञाप्यतामिति ।
उक्ता वेगवती मात्रा पितरं प्रणताब्रवीत् ॥ २५ ॥
तात त्वयि वनं याते को मे दास्यति मोदकान् ।
कल्पवृक्षप्रसूतानि फलानि कुसुमानि वा ॥ २६ ॥
तेनोक्तं येन येनार्थो दुर्लभेनापि केनचित् ।
तत्तन्मानसवेगस्ते भ्राता दातास्यतामिति ॥ २७ ॥
इति राज्यकलत्रमित्रपुत्रान्
गृहधामं च तृणाय मन्यमानः ।
गुणसत्त्वरजस्तमःकलङ्कां
प्रकृतिं हातुमगाद्वनं नरेन्द्रः ॥ २८ ॥

II

श्रियं मानसवेगोऽपि कदलीदलचञ्चलाम् ।
शक्तित्रयप्रयोगज्ञः कृतवानचलाचलाम् ॥ २९ ॥
अथ याते क्वचित्काले मतङ्गाधिपतेः सुता ।
आषाढं वायुमुक्तेति सखीपरिवृतागमत् ॥ ३० ॥

23. pāvanatama B pāvanatame *m.* — 24. siṃhāsanāsanaṃ B; cadraṣṭāaraṣṭāsitām *m.* — 25. kalpāṇi. — 27. dullabhenā- *m;* mānaṣavegas B mānuṣaveṣas *m;* mrātātaddāsyatām *m.* — 28. gṛhadhāmañ B gṛhayāmaṃ *m;* -satva-. — 29. çryaṃ *m.*

28. Tṛṇāya : cf. 5.

Dhāma- = dhāman-, *Scol.* ad *Hem.*, *Abhidh.*, 992.

Mètre : vasantamālikā.

29. Çaktitrayaprayoga- : les trois ressorts du pouvoir royal (trisādhanā çaktir, *Raghuvaṃça*, III, 13) : ce sont : prabhāva «le prestige», mantra «le bon conseil», utsāha «l'énergie».

30. Mataṅgādhipateḥ : il s'agit probablement de Vāyumukta, qui remplit le rôle de juge suprême des Vidyādharas (XX, III), le même que Vāyupatha du *K.S.S.* (CVI). (Cf. III, 47 et la note : le père de Surasamañjarī appartient à la tribu de Mataṅga : on prendra de préférence siddhamātaṅgavidya comme un adjectif; le nom du personnage sera Utpalahastaka parmi les Vidyādharas comme parmi les hommes.)

सा स्म वगवतीमाह राजपुत्रि किमास्यते ।
उत्तिष्ठाकाशमार्गेण गच्छामो मलयाचलम् ॥ ३१ ॥
शृङ्गकुञ्जनितम्बेषु तस्य रम्येषु रम्यताम् ।
नेत्रापिधानिकाख्यानपुत्रिकाकन्दुकैरिति ॥ ३२ ॥
तयोक्तं नास्ति मे शक्तिर्गन्तुमाकाशवर्त्मना ।
अलब्धकुलविद्यायाः सखि तन्मृष्यतामिति ॥ ३३ ॥
उपहस्य ततस्तास्तामुच्चैस्ताडितपाणयः ।
आधताम्बरपत्राः खं हंसकन्या इवास्थिताः ॥ ३४ ॥
भ्रातुरन्तिकमायाता सावेगा वेगवत्यपि ।
तेन चोक्ताङ्कमारोप्य मातः किं दीयतामिति ॥ ३५ ॥
तयोक्तं देहि मे विद्यां महाराज ससाधनाम् ।
सिद्धविद्याभिरद्याहं सखीभिर्हासिता यतः ॥ ३६ ॥
अचिरेणैव दास्यामि मातरित्यभिधाय सा ।
भ्रात्रा विसर्जितासारबालालंकारवञ्चिता ॥ ३७ ॥
एकदा गौरिमुण्डस्य भगिनी गौरिमद्यशाः ।
गता वेगवतीं द्रष्टुमाषाढं ससखी सखीम् ॥ ३८ ॥

---

31. -ākāsa- B. — 32. sṛṅga- B: tasyā *m.* — 33. ākāsa- B; kalavi- *m.* — 36. samādhanāṃ *m;* hāsito *m.* — 37. abhidhīya *m;* bhrātāvisarjitāsābālā- *m.* — 38. gaurimadyasā B gaurimedyasā *m.*

32. Netrāpidhānikā : le jeu qui consiste «à se boucher les yeux» (netra-apidhāna-). Pour la formation en -ikā de noms de jeux, voir *Pāṇini,* II, 2, 17 (et cf. padmabhañjikā, V, 156 et *Essai sur Guṇāḍhya*, p. 224, n. 2). Voir aussi Printz, *Kuhn's Zeitschrift,* 1911, p. 88 et suivantes.

36. Le mot siddhavidyā est attesté comme substantif. Ici siddhavidya adjectif, «qui possède la science parfaite» ou «qui p. la science des Siddhas» (ce qui revient à peu près au même).

38. Gaurimuṇḍasya : il faut lire avec les mss. Gaurimuṇḍa et non Gaurīmuṇḍa (de même dans les passages du *K. S. S.* où ce nom se rencontre, comme l'ont fait avec raison Durgâprasâd et Kâçinâth Pâṇdurang Parab contrairement à Brockhaus). Ici -rī- donnerait une combinaison métrique inadmissible : chez les bons poètes, la 5ᵉ est toujours brève quand la longue 4ᵉ est précédée d'une longue 3ᵉ: cette règle n'est violée que dans les textes dont la versification est peu soignée, et encore très rarement (une fois sur 240 pādas impairs environ dans *Manu*); il n'est pas à présumer qu'elle le soit dans le nôtre. — Cf. Gaurimat, Gaurimadyaças, Gaurisaktha.

Gaurimuṇḍa est le chef suprême du Himālaya du Sud (*K. S. S.*, CVII). Gaurimadyaças n'est pas mentionnée dans la version cachemirienne de la *B. K.*

उपहस्य च तां सापि विपक्षामिव सारसीम् ।
सपक्षा राजहंसीव गता प्रति हिमाचलम् ॥ ३९ ॥
वेगवत्यपि स्वस्थानं गत्वा भ्रातरमब्रवीत् ।
किमयं क्षिप्यते कालो विद्या मे दीयतामिति ॥ ४० ॥
तेनोक्तमपि दास्यामि त्वरसे किमकारणम् ।
गुरुकार्यक्रियाव्यग्रं किं न पश्यसि मामिति ॥ ४१ ॥
सा गत्वा मन्युभारेण स्फुटन्तीव त्वरावती ।
अपतन्मातुरुत्सङ्गे संतप्तेव वसाह्रदे ॥ ४२ ॥
पृथिवीं तु समाहूय सचिवौ भर्तुरब्रवीत् ।
अचिरेण पितुर्मूलं दारिकां नयतं युवाम् ॥ ४३ ॥
अन्तरङ्गो हि संबन्धः पुत्रैः पित्रोरकृत्रिमः ।
भ्रातरस्तु द्विषन्त्येव भ्रातॄनेकोदरानपि ॥ ४४ ॥
तौ तामाकाशमार्गेण नीतवन्तौ तपोवनम् ।
मार्गायतनमार्गेषु साम्भःसु गमितश्रमाम् ॥ ४५ ॥
अथास्थिमयकायानां तडिद्बभ्रुजटाभृताम् ।
ते ऽपश्यंस्तत्र वृन्दानि तापसानां तपस्यताम् ॥ ४६ ॥
पृच्छन्ति स्म च तत्रैकमभिवाद्य तपस्विनम् ।
ब्रह्मन् ब्रूहि तमुद्देशं यत्रास्ते वेगवानिति ॥ ४७ ॥
सो ऽब्रवीत्पर्वताग्रे ऽसावङ्गुष्ठाग्रेण तिष्ठति ।
अनुगच्छति गच्छन्तमंशुमन्तं च चक्षुषा ॥ ४८ ॥
पर्णशाला च तस्येयं यस्याः सिंहमतङ्गजौ ।
अङ्गणे क्रीडतः प्रीताविमौ च शिखिपन्नगौ ॥ ४९ ॥
आसन्नागमनस्यासौ दग्धं हि कठिनैः करैः ।
तस्याह्लादयितुं चक्षुरेष मन्दायते रविः ॥ ५० ॥

39. gatī *m.* — 40. dīyatyam *m.* — 41. tvacase B tvavase *m;* akāraṇa B; pasyasi B paçyāmi *m. Après* 41 *on lit le demi-çloka suivant :* ‖ na kāryam mama kāryeṇa tvadīyeneti so 'bravīt. ‖, *autre rédaction de* 41cd. — 43. dārakāṃ *m;* nayanaṃ *m.* — 44. jaṃtaraṃgo *m;* akṛtimaḥ B. — 45. tapodhanaṃ *m;* mārgāgatana- B¹; gamitasramāṃ B -çramaṃ *m.* — 46. -paçyantatra B. — 48. tiṣṭhiti B; aṃsumantañ B aṃçrumaṃtaṃ *m.* — 49. tastheyaṃ *m;* yasyāḥ B¹ (*une main postérieure a barré le point inférieur du visarga*) yasyā *m;* sikhi- B.

41. Ce vers est suivi d'un demi-çloka (voir notes critiques) que j'élimine; il n'est qu'une autre rédaction de 41cd et il n'y a pas à supposer de lacune ici.

तपस्यान्तं ततः कायं सच्छायमिव वेगवान् ।
काश्यपीयं यदभ्यागाद्वैखानसमृगावृतः ॥ ५१ ॥
अथ वेगवती दृष्ट्वा वेगवन्तं तथाविधम् ।
अब्रवीन्मन्त्रिणौ नायं मम तातः स वेगवान् ॥ ५२ ॥
तस्य चन्द्रप्रभच्छत्रप्रभाः समुकुटप्रभाः ।
प्रभासयन्ति धावन्तीं पुरः सामन्तसंततिम् ॥ ५३ ॥
अयं तु सिंहमातङ्गशार्दूलसमृगतापसैः ।
त्यक्तवैरैः सहायाति नूनं को ऽप्युग्राश्रमिकः ॥ ५४ ॥
ताभ्यामुक्तं स एवायं तथा चेत्यं च दृश्यते ।
तादृशा एव दृश्यन्ते तथा चेत्यं च साधवः ॥ ५५ ॥
वन्द्यतां च पितेत्युक्ता वन्दमानार्द्रचक्षुषा ।
अङ्कमारोपिता पित्रा रूढदर्भाङ्कुरव्रणम् ॥ ५६ ॥
मन्त्रिणावपि भर्तारमुचितान्तरवर्तिनौ ।
शिरोवाग्भिरवन्देतामथ वेगवतोदितौ ॥ ५७ ॥
आगच्छतं ममाभ्याशमथ स्थित्वातिदूरतः ।
जनरञ्जनमात्रं हि गतं तद्राज्यनाटकम् ॥ ५८ ॥
आसन्नस्थण्डिलस्थौ तौ पृष्टवानथ वेगवान् ।
राज्ञो मानसवेगस्य राज्यं नो वर्धतामिति ॥ ५९ ॥
ताभ्यामुक्तमशक्यं तद्गुणाढ्येनापि शंसितुम् ।
तमपेक्ष्य तु राजानः शेषाश्छत्रविडम्बकाः ॥ ६० ॥

51. tapasyantaṃ B¹*m*. — 52. tathādhipaṃ B¹ *semble corrigé en* tathāvidhaṃ *par* B². — 53. caṃdraprabhaṃ *m;* chatra; dhāvantī. — 54. sārdūla B. — 56. -ārddhacakṣuṣāṃ *m;* āroṣitā B. — 57. siro- B; avaṃdyetām *m;* vegavatauditau B¹ vegavatauditau B²*m*. — 58. abhyāsam B -āmam *m*. — 59. sthaṇḍilesetau B¹ sthaṇḍilesthautau Bⁿ sthaṃḍitasthautau *m;* mānaṣa-. — 60. mānaṣa-; açakṛttad *m;* guṇāḍhyeṇā- B; saṃsituṃ B -çituṃ *m;* apekṣa B; çeṣāchatra- B çeṣāçchatra- *m*.

52. Ayam.... sa : ce passage illustre bien la différence de sens entre ayam (sens du latin hic) et sa, démonstratif de rappel (celui dont il a été question antérieurement — sens du latin is). Cf. tasya 53 et ayam 54.

56. Rūḍhadarbhāṅkuravraṇam : la poitrine du saint a des crevasses (réelles ou apparentes à cause de son excessive maigreur) dans lesquelles on voit des brins d'herbe darbha qui y ont poussé ou plus exactement qui sont comme la cicatrice de ces blessures : ruh- veut dire «se cicatriser» en parlant d'une blessure.

60. Guṇāḍhyenāpi : Guṇāḍhya lui-même (n'en saurait faire l'éloge); allusion 1° à l'ingéniosité proverbiale de Guṇāḍhya 2° au fait que dans la *B. K.*,

इयं मायविका कस्मादानीतेति च पृच्छते ।
विद्यालाभार्थमित्युक्तं तस्मै ताभ्यां यथेप्सितम् ॥ ६१ ॥
तेनोक्तमचिरादेषा लब्धविद्या गमिष्यति ।
युवाभ्यां प्रीतिपन्नाभ्यां स यत्नः पाल्यतामिति ॥ ६२ ॥
वेगवत्यपि सोत्साहा करोति स्म महत्तपः ।
कल्पिताहारपर्तव्या फलमूलजलाग्निभिः ॥ ६३ ॥
जलाहरणसंमार्गकुसुमप्रचयादिभिः ।
आराधयद्दुराराधानसौ वैखानसानपि ॥ ६४ ॥
उच्चिन्वन्ती कदाचित्सा पुष्पं काननमल्लिकाम् ।
हा सर्पेणास्मि दष्टेति साक्रन्दागमदाश्रमम् ॥ ६५ ॥
यथार्थनिहितैस्तत्र वैखानसकुमारकैः ।
मा राजदारिके भैषीरित्युक्त्वा परिवारिता ॥ ६६ ॥
क्वासौ क्वासौ खलः सर्प इति पृष्टा कुमारकैः ।
अमुष्मिन्मालिकागुल्म इति तेभ्यो न्यवेदयत् ॥ ६७ ॥
ते त्वालोक्य तमुद्देशमवोचन्नुच्चकैस्तराम् ।
राजपुत्रि न सर्पोऽयमयं सर्पान्तकः शिखी ॥ ६८ ॥
दृष्ट्वा प्रसारितां ग्रीवामुत्फणाशीविषोपमाम् ।
त्वया सर्प इति ज्ञातं तस्मादाश्वस्यतामिति ॥ ६९ ॥
उटजाङ्गणमानीतः स मयूरः कुमारकैः ।
विचित्रैर्नर्तितो मार्गैस्तया कुट्टिततालया ॥ ७० ॥
प्रेक्षणीयं च तद्द्रष्टुमदृष्टं वनवासिभिः ।
मिलिताः सर्व एवाशु तपोवननिवासिनः ॥ ७१ ॥

61. mānavikā. — 62. tenomacirād B[1]; yuvābhyāmītipannābhyām B[1] *correxit* B[a] yuvābhyāṃsāti- *m.* — 63. mahantapaḥ B. — 64. saṃmāga B[1] saṃmārja (?) B[a]; pracakādibhi *m;* aso B; vaiṣānasān *m.* — 65. -āmagad. — 66. bheṣīr. — 67. amusmin B. — 68. ālocya B[1]; uccakestarāṃ B[1]; çikhāṃ *m.* — 69. -āsīviṣo- B; jñānaṃ *m;* āsva- B. — 70. mayūra B[1]*m correxit* B[a]; vicitrair *sur grattage* B; nartitā *m;* mārgai B mārge *m;* kuhita- *m.* — 71. militā; -āstus B -āstu *m;* nivāsinaṃ *m.*

Mānasavega est dépeint comme un monstre. Bien que les louanges qu'ils vont faire de leur maître soient sans restriction, leurs paroles ici sont à double entente. En fait c'est pour appuyer la plainte de Vegavatī contre son frère qu'ils sont venus.

62. -pannābhyāṃ : il faut donner à panna le même sens qu'à -panna précédé d'un préverbe tel que upa-.

70. Mārgais : mārga = mesure. Cf. *B.K.M.*, XIII, 45 : kelikalālolā... mattabarhiṇām aṅgahārābhidam... karatālair anartayam.

एतस्मिन्नेव वृत्तान्ते वेगवन्तमुपागतम् ।
विश्रान्तमुपगम्येदमवोचंस्तं तपस्विनः ॥ ७२ ॥
राजदारिकया राजंस्तपस्तप्तं सुदुस्तपम् ।
वयमाराधिताः प्रीतास्तद्विद्यां लभतामिति ॥ ७३ ॥
तेनोक्तं यदि च प्रीता नो भवन्तोऽनुजानते ।
ततो गृह्णात्वियं विद्याः पञ्चाङ्गपरिवारिताः ॥ ७४ ॥
अनया यत्तपस्तप्तमस्माभिश्चेदमीदृशम् ।
तदस्याः कुलविद्यानामलं भवतु सिद्धये ॥ ७५ ॥
यच्च मानसवेगस्य विद्यासिद्धिप्रभावितम् ।
बलं चतुर्गुणं तस्माद्बालेयं प्रतिपद्यताम् ॥ ७६ ॥
यश्चास्याः कोऽपि दीर्घायुर्ग्रहीष्यति वरः करम् ।
राज्यस्य दशमं भागं स मदीयस्य भोक्ष्यति ॥ ७७ ॥
एवमुक्त्वा ततस्तस्यास्तत्सर्वं दत्तवान्पिता ।
सापि लब्धाभ्यनुज्ञाना वेगेनोदपतन्नभः ॥ ७८ ॥
ततः कनकलेखेव भासा कषशिलामसौ ।
पिशङ्गभवती यान्ती श्यामलामम्बरस्थलीम् ॥ ७९ ॥
दृष्टा मानसवेगेन संभ्रमभ्रान्तचक्षुषा ।
अवातरत्तदास्थाने हंसीवाम्भोजकानने ॥ ८० ॥
कथंचित्प्रत्यभिज्ञाय लज्जितेनेव तेन सा ।
आलिङ्ग्योत्सङ्गमारोप्य गमिता मातुरन्तिकम् ॥ ८१ ॥

72. vṛṃtāṃtegavaṃtam *m;* visrāntam B vibhrāṃtam *m;* avocan B. — 73. rājan B; suduṣkaraṃ *m.* — 74. padi B; prītābhavanto B prītānabhavaṃto *m.* — 76. macca *m;* mānaṣa-. — 77. dīrghāyuhr *m;* bhokṣyati B notkṛti *m.* — 78. -ābhyanujñātā; -odayatan B -odeyataṃ *m.* — 79. -lekhena *m;* bhāṣā; -silām B; pisaṅga; syāmalām B. — 80. dṛṣṭvā *m;* mānaṣa-; avātaran B -taraṃ *m.* — 81. aliṅgyo- *m.*

74. Pañcāṅga- : ce terme a probablement une valeur technique, qui m'échappe. Quand il s'agit d'un arbre, pañcāṅga = racines, tronc, feuilles, fleurs, fruits.

Les sciences magiques s'acquièrent au prix d'une épreuve ascétique (cf. *K. S. S.*, CVII, etc.).

79. Ambarasthalīm «sol» : *Hem., Abhidh.*, çeṣa 156.

Piçaṅgabhavatī : c'est le terme embarrassant. Un remède radical serait de lire piçaṅgikurvatī (compléments : kaṣaçilām d'une part, ambarasthalīm de l'autre). Mais ce procédé est discutable. Piçaṅgabhavatī n'est pas impossible, à condition de couper piçaṅgabha-vatī «pourvue de ce qui a l'éclat fauve (= la couleur de l'or)», se rapportant à la fois à kanakalekhā et à Vegavatī. — On pourrait encore songer à piçaṅgabhavad āyāntī. — Pour comprendre çyāmalām et toute la comparaison, il faut songer que Vegavatī arrive

मातापि दुहितृस्नेहमनादृत्यैव सत्वरा ।
अपृच्छदपि कच्चासि कुशली वेगवानिति ॥ ८२ ॥
किं वाफलप्रलापेन सारमेवावधीयताम् ।
यासौ वेगवती साहं तस्य वेगवतः सुता ॥ ८३ ॥
अतीते तु क्वचित्काले सशरीरेव चारुता ।
नीता मानसवेगेन कापि भूमौ वराङ्गना ॥ ८४ ॥
सा च तद्गुणभूयिष्ठां वृद्धं द्वेष्टि कथामपि ।
क्षीणदोषगुणा साध्वी कामस्तुतिकथामिव ॥ ८५ ॥
स कदाचित्क्वचित्कांचिद्दृष्ट्वा तापसकन्यकाम् ।
बलाद्ग्रहीतुमुपक्रान्तस्तया चोक्तं स्फुरद्रुषा ॥ ८६ ॥
युक्तं शापाग्निना दग्धुं त्वादृशं पापचेतसम् ।
किं तु वेगवतः साधोः पुत्रत्वं तेन मुच्यसे ॥ ८७ ॥
सर्वथा शापनामानं प्रतीच्छतु वरं भवान् ।
अधीरहृदयाः प्रायस्त्रासगम्या भवादृशाः ॥ ८८ ॥
बलात्कामयमानस्य निःकामां कांचिदङ्गनाम् ।
भवतः शतधा मूर्धा दग्धबुद्धेः स्फुटेदिति ॥ ८९ ॥
ततस्त्रस्तस्ततः शापादकामां कामिनीमसौ ।
अपि नोत्सहते द्रष्टुं कुत एव निषेवितुम् ॥ ९० ॥
स तु मामब्रवीन्मातस्तथा मदनमञ्जुका ।
प्रोत्साह्यतां यथा क्षिप्रमुपसर्पति मामिति ॥ ९१ ॥
अथ बालस्वभावेन सकुतूहलया मया ।
अशोकवनिकामध्ये दृष्टा मदनमञ्जुका ॥ ९२ ॥

82 *om. m;* anāddatyaiva B. — 83. vegavatīcasāhintasya B vegavatīsāhitasya B°. — 84. sasarīre- B; mānaṣavegena B mānaṣaveçena *m.* — 86. dṛṣṭyā B; sphurudruṣā B. — 87. dagdhaṃ B; sādhyoḥ B. — 88. tavādṛçāḥ B. — 89. satadhā B satayā *m;* mūrdhā B sūryo *m;* -buddhesphu-. — 90. notsaṃhate *m;* nisevituṃ B. — 91. mānas *m.* — 92. vaṇikā B.

de nuit : c'est en effet après ses exercices quotidiens, donc après le coucher du soleil (cf. 72 et 50), que Vegavat lui a donné congé.

84. Kāpi... : c'est Madanamañjukā.

86-90 Ce récit intercalé ne concerne plus Madanamañjukā : il est destiné à expliquer pourquoi le ravisseur a eu recours aux bons offices de sa sœur.

87. Je garde putratvam; la phrase est possible ainsi. Mais il serait très tentant de lire putras tvam.

संक्षिप्तमधितिष्ठन्ती स्कन्धपर्यन्ततोऽञ्जनम् ।
आनयन्त्यक्रमालेव पुराणकदलीपुटम् ॥ ९३ ॥
पर्णग्रन्थ्याः शिरोभागे निहितः संपिधानकः ।
पटस्याभ्यन्तरे न्यस्तः सबलः पाणिशायया ॥ ९४ ॥
अथ लज्जितविश्रब्धां मञ्जुकामहमब्रवम् ।
कस्ते मानुषदोषार्थः कुरु विद्याधरं पतिम् ॥ ९५ ॥
मुग्धे मानुषजातावृद्धरोगाद्युपद्रवाः ।
विद्याधरास्तु विद्यानां प्रभावान्निरुपद्रवाः ॥ ९६ ॥
राजा मानसवेगस्तु भर्ता ते वर्ण्यतां कथम् ।
यो विद्याधरराजानां राजा ख्यातस्त्रियामिति ॥ ९७ ॥
दोषानपि मनुष्याणां गृह्णाति स यथा यथा ।
तथा तथाभवत्तस्याः प्रीतिस्फीतायमाननम् ॥ ९८ ॥
गुणान्विद्याधराणां तु गृह्णाति स यथा यथा ।
तथा तथाभवत्तस्याः क्रोधजिह्मायमाननम् ॥ ९९ ॥
आगन्तुको यदा चैनां प्रीतिक्रोधावमुञ्चताम् ।
गृह्णाति स तदा शोकः सनिश्वासास्रवेपथुः ॥ १०० ॥
अथास्याः परिरभ्यास्यमशीतस्पर्शमब्रवम् ।
अलं भगिनि संताप्य जीवितं रक्ष्यतामिति ॥ १०१ ॥
तथा तूक्तं मया नेदमात्तदुःखेन रुच्यते ।
अश्रव्यं तु भयं भीममाहृतं मन्दया मया ॥ १०२ ॥
सर्वविद्याकलाभिज्ञः सर्वरूपवतां तुला ।
कुलविद्याधनैर्यस्य तुङ्गैरपि न माद्यति ॥ १०३ ॥
स मद्वृत्तान्तमज्ञात्वा दशां यास्यति कामपि ।
ततः सान्तःपुरामात्यराष्ट्रः सोमान्वयो नृपः ॥ १०४ ॥

93. apitiṣṭanti *m.* — 94. sapidhānakaḥ. — 95. visrəmbhām B visrastāṃ *m;* abruvaṃ *m.* — 96. baddharogā- *m.* — 97. mānaṣavegas B mānuṣa- *m.* — 98d *om. m.* — 99abc *om. m.* — 100. āgantuko B[1]*m*; padā *m;* cenāṃ B[1]; -āçra- *m.* — 101. asīta- B; abruvaṃ *m;* bhamiti *m;* rakṣatām *m.* — 102. āhṛta B. — 103. kalābhiḥjñaḥ *m;* kulavidyādharebhyaçcaturaṃgair *m.* — 104. mavṛttāntam *m;* dasāṃ B dayām *m.*

94. Saṃpidhānaka = saṃpidhāna «manteau, couverture» (mot de lexique).

95. Mañjukām : hypocoristique; mais il est tentant de lire ajjukām (v. 115, etc.).

103. Tulā : «équivalence», «équivalent», avec le génitif (*Pāṇ.*, II, 3, 72).

104. Somānvayo : la généalogie de la race lunaire s'établit ainsi, d'après notre

किं तु प्रत्याशया प्राणानेकया धारयाम्यहम् ।
यदादिष्टः स्फुटादेशैरसौ विद्याधरादिभिः ॥ १०५ ॥
विद्यातपविद्याध्मातान् विद्याधरभुजंगकान् ।
विद्याधरनरेन्द्रो ऽयं कर्ता वान्तविषानिति ॥ १०६ ॥
ततः श्रुत्वेति वत्सायं जाताहं जातसंशया ।
विद्याधरनरेन्द्रः स्यादुत न स्यादसाविति ॥ १०७ ॥
किं काचिद् दूतिका यातु साप्यशक्ता परीक्षितुम् ।
दूतिका मत्समा नास्ति स्वयमेव व्रजाम्यतः ॥ १०८ ॥
ततः स्वार्थाहितोत्साहा पृच्छामि स्म तव प्रियाम् ।
तव प्रियाय किं वार्त्ता त्वदीया दीयतामिति ॥ १०९ ॥
अथ क्षणमिव ध्यात्वा तयोक्तं स्मयमानया ।
तुल्यमेवावयोः कार्यं शक्तौ सत्यां किमास्यते ॥ ११० ॥
इदं हि गुरु कर्तव्यं क्षिप्रकालं च सीदति ।
ईदृशं त्वादृशी कर्म कार्यते कथमन्यथा ॥ १११ ॥
इयं मण्डलिता वेणी मया सखि तवाग्रतः ।
दृष्ट्वासैव चपला भीषणाशीविषाङ्गना ॥ ११२ ॥
दाह्या वा दहनेनेयं मोच्या वा गृध्रजम्बुकैः ।
अर्यपुत्रेण वादग्धदारुणा गतिदारुणा ॥ ११३ ॥

105. pratyāsayā B. — 107. narendra. — 108. vrajāmyātiḥ B. — 109. pṛchati *m:* sma tava priyām + 109cd *om. m.* — 110. atha... tayoktam *om. m;* saktau. — 111. kṣipraptakālam *m.* — 112. mayāsasvitavā- *m;* -āsīviṣa- B. — 113. mocyā B māryā *m;* gṛddha- B; ārya- *m;* -āgani- *m.*

texte : Arjuna – Abhimanyu – Parikṣit – Janamejaya – Çatānīka – Udayana. Cela résulte de V, 91 où l'on voit qu'Udayana est le fils de Çatānīka et de XVII, 115-116 d'où il appert que Parikṣit est le fils d'Abhimanyu. Cette généalogie est conforme à la fois aux données du *Mahābhārata* et à celles de la tradition bouddhique (voir *Essai sur Guṇāḍhya*, p. 236 et 285). Le *K. S. S.* au contraire fait de Parikṣit l'arrière-petit-fils d'Abhimanyu et intercale Sahasrānīka entre Çatānīka et Udayana (IX, début).

105. Parmi les indices de la future grandeur de Naravāhanadatta figure le témoignage d'Amitagati (cf. IX, 108).

106. -bhujaṃgakān : dérivé en -ka à valeur péjorative.

107. Jātasaṃçayā etc. : Vegavatī est intriguée. Si l'amant de Madanamañjukā doit devenir le chef des Vidyādharas, il est son futur mari (XIII, 9). C'est donc dans son propre intérêt qu'elle se décide à faire un effort (109).

110-114. Tulyam evāvayoḥ etc. : j'entends par le duel āvayoḥ Madanamañjukā et Vegavatī. Le discours de Madanamañjukā n'est pas très clair. Elle doit prévoir que Vegavatī deviendra la femme de Naravāhanadatta et que cette alliance fera de lui un vidyādhara. Cela explique qu'elle sourie et qu'elle ne réponde pas à la question

गत्वा चागच्छ दोलेव न स्थातव्यं क्वचिच्चिरम् ।
असक्ता हि गतिः सख्याः कान्तं यान्त्याः स्मृतेरिव ॥ ११४ ॥
इत्युक्ताज्जुकया क्षिप्रं नभसाहमिहागता ।
अपश्यमर्यपुत्रं च हा क्वासीति प्रवादिनम् ॥ ११५ ॥
अनिन्दितमुपायं च विचिन्त्यात्मसमर्पणे ।
अज्जुकारूपया तुभ्यमात्मा संदर्शितो मया ॥ ११६ ॥
निवारिताश्च यद्यूयं तदालिङ्गनलालसाः ।
स दोषः कन्यकात्वस्य विशुद्धकुलजन्मनः ॥ ११७ ॥
यच्चायाचितदानाय विवाहः कारितो मया ।
स च संस्कार्तुमात्मानं क्वात्र यत्नः क्व चाज्जुका ॥ ११८ ॥
यच्च पातुमनिच्छन्तः पायिताः स्थ बलान्मधु ।
तत्र यत्कारणं तच्च प्रायः प्रत्यक्षमेव च ॥ ११९ ॥
न द्रष्टव्यास्मि सुप्तेति प्रतिषिद्धाः स्थ यन्मया ।
तत्कुतूहलवृद्ध्यर्थं वामशीला हि बालता ॥ १२० ॥
सर्वथा विस्तरेणालमज्जका मदमञ्जुका ।
नीता मानसवेगेन लक्ष्मीरिव दुरात्मना ॥ १२१ ॥

**114.** kvaciram *m.* — 115. ityuktvājukayā; -āgata *m;* apasyam B; aryaputraç *m.* — **116.** tulyam *m.* — 117. lālasā; sadeça B[1] sadoça B[2] sadāça *m.* — 118. -ājukā B. — 119. pāyitāstha; madhuḥ B. — 120. pratisiddhāstha B pratiṣiddhāstha *m;* -vṛdhyartham B. — 121. -ālamajjamadamañjukā B -ālasajja-madamajjukā *m;* mānaṣavegena B mānuṣaveṣena *m.*

posée (kim vārttā etc.). Elle se borne à presser Vegavatī d'agir et lui donne carte blanche, en la flattant (īdṛçam tvādṛçi etc.). Mais elle annonce aussi des résolutions terribles, en prévision du cas où Vegavatī, abusant de sa confiance, lui enlèverait son amant.

**115 et 118** (cf. 121). Ajjukā pourrait passer pour un hypocoristique de Madanamañjukā; mais 121 interdit cette explication. Prākrit ajjukā (autres formes : ayyukā, ajjuā, ayyuā — et ajjakā, voir 121, note) = sk. āryakā. C'est le terme dont on doit se servir au théâtre pour interpeller une courtisane, selon le *Daçarūpa*, II, 70. Il est fréquent dans la *Mṛcchakaṭikā*. Bien qu'il n'ait pas par lui-même le sens de «courtisane» et que l'emploi n'en ait rien de blessant, Vegavatī s'en sert dans le dessein de rabaisser Madanamañjukā. On voit, au v. 118, qu'une «ajjukā» est à ses yeux peu de chose.

119. Il fallait lui enlever l'exacte notion des choses pour qu'il ne s'aperçût pas de la supercherie; elle se contente de le laisser entendre, par pudeur.

121. Ajjakā Madamañjukā : *m* indique que la lacune d'un akṣara est après ajja; si néanmoins on restituait mada*na*mañjukā on ne saurait plus que faire de ajja où il faudrait chercher un mot fournissant une longue 2°. Madamañjukā s'explique très bien au prix d'un peu de subtilité. Madanamañjukā doit signifier quelque chose comme «ravissante comme l'Amour» ou encore «corbeille d'Amour», si -mañjukā

तदाज्ञापय मां क्षिप्रमिमां मदनमञ्जुकाम् ।
आनयामि परैर्नीतां मुद्रा नीतिरिव श्रियम् ॥ १२२ ॥
आसीच्च मम न श्लाघ्यं प्रेषणीयजनोचितम् ।
भर्तुः कारयितुं कर्म भार्यां तुङ्गकुलोद्भवाम् ॥ १२३ ॥
अथैनामद्धुवं चण्डि श्रुतमेहि प्रयावहे ।
न हि ताम्रशिखण्डानामद्यापि स्फुरति ध्वनिः ॥ १२४ ॥
अहमपि धवलेन्दुवंशजन्मा
कुलिशकठोरकनिष्ठिकाप्रकोष्ठः ।
प्रियसमरपरावरोधबद्धान्
अहतरिपुः कथमाहरेय दारान् ॥ १२५ ॥

इति बृहत्कथायां श्लोकसंग्रहे वेगवतीदर्शनो नाम चतुर्दशः सर्गः ॥ १४ ॥

122. çriye *m.* — 123. preṣaṇīya-; bhāryā. — 124. -aināṃm B -aitām *m;* aihi B; -sikhaṇḍānām B. — 125. -vaṃsa- B; kaniṣṭakā B kaniṣṭikā *m; -*sagara-parāvaropa- *m;* kathayāhaᵣepa *m.*

iti *om.* B; -darçanaṃ B -darçana *m;* nāmaç B; caturdaça B.

— il y a des grâces spéciales pour les noms propres! — a ici la même valeur que mañjūṣā (et le fait est que l'*Avaloka* (ad *Daçarūpa*, IV, 34) appelle l'héroïne Madanamañjūṣā; quant à -mañcukā du *K.S.S.* et de la *B. K. M.*, c'est de la paiçācī). En remplaçant, dans le nom de sa rivale, madana (Amour) par mada (ivresse), Vegavatī, sans altérer beaucoup ce nom, lui donne un sens bas; ce faisant, elle est dans son rôle car son récit a été ordonné pour nuire à Madanamañjukā (courtisane — qui a approuvé par avance ce que ferait Vegavatī, v. 110-114). Quant à ajjakā, je ne vois pas pourquoi, les mss. donnant ajja-, on serait forcé de lire ajju- : il y a deux prâkritismes dans ajjukā (jj = ry et u- substitué à a- dans le thème en a- qui sert de base; ajjakā, avec un seul prâkritisme, est tout aussi admissible.

124. Tāmraçikhaṇḍānām : tāmraçikhaṇḍa = tāmraçikhin (cf. I, 53).

125. Naravāhanadatta qui vient de se payer lui-même d'une mauvaise raison, se justifie aux yeux de Vegavatī par une énorme vantardise.

Mètre : puṣpitāgrā.



IMPRIMERIE NATIONALE.

# XV

परिपाट्या ततः प्राप्तास्त्रयो हरिशिखादयः ।
प्रभाते मामवन्दन्त न तु वेगवतः सुताम् ॥ १ ॥
गोमुखस्त्वचिरात्प्राप्तः प्रथमं मामवन्दत ।
अस्मदासन्नमासीनां भक्त्या वेगवतीं ततः ॥ २ ॥
असौ हरिशिखेनोक्तः सुष्ठु खल्वसि पण्डितः ।
वन्द्यावन्द्यविचारे हि पण्डिताः समदर्शिनः ॥ ३ ॥
अथोक्तं तेन मत्तो ऽस्ति भवानेवातिपण्डितः ।
वन्द्यलक्षणयुक्तां यो वन्द्यामपि न वन्दते ॥ ४ ॥
भण केन न पूज्येयं या नः पूज्येन पूजिता ।
ननु मन्दमते लोकः पूज्यपूजितपूजकः ॥ ५ ॥
स्वामिनी स्वामिसंबन्धात्स्वामीवार्हति वन्दनाम् ।
यक्षाधमैर्हि जघन्यैर्लोकः कार्याणि कार्यते ॥ ६ ॥
इत्यादि वदतस्तस्य पक्षमुत्कर्षयन्निव ।
अहं वेगवतीवृत्तं तद्वर्णितमवर्णयम् ॥ ७ ॥
विद्याधरकुमारीणां प्रवृत्तावर्तनीति ते ।
वदन्तो मुदिता गत्वा सेनाभर्त्रे न्यवेदयन् ॥ ८ ॥
तेनापि तातपादेभ्यस्तैरस्वाभ्यां निवेदितम् ।
हर्षदुन्दुभिवृन्दैस्तु नदद्भिर्वृत्रशत्रवे ॥ ९ ॥

1. paripādyā *m;* tanuvegavataḥ *m.* — 2. māvandataḥ B māmavaṃdataḥ *m.* — 3. -darçanaḥ B -darçitaḥ *m.* — 4. mattosi; vandyate. — 5. bhaṇa B naṭā *m;* keṇa B tena *m.* — 7. yakṣaṃ *m;* vṛttantaṃvar- B vṛttaṃtaṃvar- *m.* — 9. nadadbhivṛtrasatrave B.

4. Matto : interpréter mat-taḥ «(tu es bien plus paṇḍit) que moi».

7. -vṛttaṃ tadvarṇitam : la faute est due sans doute à ce que le copiste a compris vṛttāntam.

8. Āvartanī : sous-entendre vidyā : «la science des métamorphoses». C'est par l'emploi de cette même science que Budha rend au roi Ila changé en femme sa forme masculine (vidyām āvartanīṃ puṇyām āvartayati sa dvijaḥ, *Rāmāyaṇa*, VII, 88, 20).

गभीरोत्पातजीमूतसंघातप्राद्भीषणे ।
प्रमोदध्वनिते याते तन्वमाने दिवानिशम् ॥ १० ॥
अथ सेनापतिः प्राप्तः प्रातर्मामिदमब्रवीत् ।
इदानीमेव देवीभ्यां देवो विज्ञापितो यथा ॥ ११ ॥
द्वितीयया वधुकया गृहीतो दारकः स्वयम् ।
कस्याश्चिदपि भार्याभिर्दृष्टः परिणयोत्सवः ॥ १२ ॥
तेन प्रसादो यद्यस्ति वेगवत्या ततः सह ।
नरवाहनदत्तस्य विवाहः कार्यतामिति ॥ १३ ॥
देवेन तु विहस्योक्तमेवमस्तु किमास्यते ।
ममापि हि मनस्यासीदयमेव मनोरथः ॥ १४ ॥
किं तु माता वरस्यास्य देवी भवतु मागधी ।
पिताहं वरपक्षे ऽस्य समस्तमवरोधनम् ॥ १५ ॥
अस्तु वासवदत्तायाः सुता वेगवतः सुता ।
समस्तदाराद्यः पक्षे तस्या एवं भवन्त्विति ॥ १६ ॥
अथान्तःपुरमन्यायाः पद्मावत्याः सुहृद्वृतः ।
नीतो ऽहं चित्रविन्यासरत्नभङ्गसमुज्ज्वलम् ॥ १७ ॥
सभर्तृबहुपुत्राभिर्नारीभिर्वेगवत्यपि ।
ज्येष्ठाम्बाभवनं नीता केलिकोलाहलाकुलम् ॥ १८ ॥
तपन्तकस्तु मागध्या प्रेषितः प्रेक्षितुं वधूम् ।
मषीकालमुखोरस्कः कारितो ज्येष्ठयाम्बया ॥ १९ ॥
कम्पमानश्च कोपेन ततः प्रत्यागतो ऽब्रवीत् ।
आर्यपुत्र खलीकारं पश्यतेमं ममेदृशम् ॥ २० ॥
श्वश्रूस्ते मां खलीकृत्य सान्तर्हासमवोचत ।
क्व यासि जाल्म लब्धो ऽसि प्रेषितस्त्वं चरः किल ॥ २१ ॥

10. tanyamāne B tasyagāne *m.* — 12. kāsyāç B. — 15. varapakṣasya B -yakṣasya *m;* samastavarobodhanaṃ (bo *sur grattage* (*de* dha?)) B samastavarabodhanaḥ *m.* — 16. tasyāevaṃtviti B tasmāevambhavaṃtviti *m.* — 17. -puramasvāyāḥ B -purasaṃvāyāḥ *m.* — 18. -bahuputrābhiḥ B -vṛddhaputrābhir *m;* nītvā. — 19. preṣataḥ B; meṣī *m.* — 20. mamedṛçāṃ *m.* — 21. svaçrūs B; avocat B; kilaḥ B.

15. Ponctuer après pitāhaṃ (cf. 47). — Varapakṣe 'sya... «tout le gynécée sera du côté du fiancé». On pourrait encore lire : sasamastāvarodhanaḥ (se rapportant à pitā); mais cf. 47 et la formule du vers 16.

एकैव मम बालेयमायाचितशतार्जिता ।
अस्याः सौभाग्यमुत्पाद्यमवश्यं कार्मणैर्मया ॥ २२ ॥
माता जामातृकस्यैव महाकार्मणकारिका ।
यया हस्ततले भर्ता गुरुधैर्यो ऽपि नर्तितः ॥ २३ ॥
वर्धयन्त्याश्चिरं पुत्रं तस्याः कार्मणमालया ।
किं मया प्रेषितः कश्चिद्भवानिव चरस्तया ॥ २४ ॥
इत्युक्त्वालक्षितो भीमामर्धचन्द्रपरंपराम् ।
देव्या निष्कासितः स्वस्मादहमन्तःपुरादिति ॥ २५ ॥
तपन्तकेन या प्राप्ता तत्र गत्वा विडम्बना ।
तामनेकगुणां प्रापञ्ज्येष्ठाम्बाप्रेषिताश्चराः ॥ २६ ॥
इति प्रवृत्तवृत्तान्ते मत्ते ऽन्तःपुरसागरे ।
मया वेगवतीपाणिर्गृहीतो मन्त्रसंस्कृतः ॥ २७ ॥
अथ गत्वा स्वमावासं वासावासं प्रविश्य च ।
अन्यादृशप्रपञ्चेव दृष्टा वेगवती मया ॥ २८ ॥
व्याहृता वचनं नादाद्गादालम्बितांशुका ।
शयनं च नवोढेव सेवते स्म पराङ्मुखी ॥ २९ ॥
उपसृत्य शनैश्चैनां ब्रवीमि स्म विलक्षकः ।
व्रीडाक्रीडाकृता पीडा दुर्भगा त्यज्यतामिति ॥ ३० ॥
तया तु कथमप्युक्तं स्फुटितस्मितचन्द्रिकम् ।
आर्यपुत्र कुतः क्रीडा गुर्वाज्ञेयं गरीयसी ॥ ३१ ॥
मया हि श्वशुरादेशादस्मिन्वीवाहनाटके ।
दुष्करा क्षिप्तवेलापि वधूकाभूमिका कृता ॥ ३२ ॥

22. ekauva B ekaika *m;* -satā- B; avasyaṃ B; karmaṇair B.— 23. gurudhyairyo B. — 24. vardhayantyāciraṃ; karmaṇa- B. — 26. prāyaṃ. — 27. vṛttāntemante B -maṃte *m.* — 28. pravisya B; anyādṛçapriyaṃcaiva *m.* — 29. nāgādādagād B *corr.* B[1] nāgādadagād *m;* -āṃsukā B; voḍhecamevate *m.* — 31. sphurita- B. — 32. svasurā- B çvasurā- *m;* vivāha- *m;* kṣiptacetopi B.

22. Kārmaṇair : «pratiques (magiques)», cf. 23 et 24.

24. Vardhayantyāç : la correction est justifiée par la nécessité de rattacher directement ce participe à tasyāḥ.

28. Vāsāvāsa «chambre à coucher».

30. Vilakṣaka = vilakṣa.

32. Vadhūkābhūmikā : «le rôle de l'épousée».

-vīvāhā : -vī- nécessaire au mètre (de même 44).

Kṣiptavelā : «auquel on n'emploie qu'une heure», «temporaire»; pour le sens, cf. kālakṣepa.

तथा नाटयितव्येयमुज्ज्वला जायते यथा ।
तस्माद्गुरुनियोगो ऽयमनङ्गः गम्यतामिति ॥ ३३ ॥
तया सह विसर्पन्त्या विवाहकथयानया ।
अनयं क्षणसंक्षिप्तामायातामपि यामिनीम् ॥ ३४ ॥
गते तु नातिसंक्षिप्ते काले चटुलसंभ्रमः ।
त्वरावान् स्खलदालापो मामवोचत्तपन्तकः ॥ ३५ ॥
आर्यपुत्र मया दृष्टाश्चतस्रः पुरदेवताः ।
भ्राम्यता नगरोद्याने दैन्यम्लानाननेन्दवः ॥ ३६ ॥
नृपस्यानिष्टमाशङ्क्य मन्ये किमपि दारुणम् ।
अन्यदुच्चलिताः स्थानं विहायेमां पुरीमिति ॥ ३७ ॥
मया वेगवती पृष्टा कास्ता इति तयोदितम् ।
क्रोधान्मानसवेगेन मम सख्यो विवासिताः ॥ ३८ ॥
मम प्रसादः क्रियतां स्वयमादाय ताः सखीः ।
नयनोन्मेषमात्रेण पश्य मामागतामिति ॥ ३९ ॥
उत्पतन्ती मया दृष्टा वेगाद्वेगवती नभः ।
आसीना चासने स्वस्मिन् सखीभिः परिवारिता ॥ ४० ॥
तदागमनवार्त्ता च व्यापज्झगिति मेदिनीम् ।
सद्यः स्वर्भानुमुक्तस्य ताराभर्तुरिव प्रभा ॥ ४१ ॥
सेनापतिरथागत्य प्रवीणैर्ब्राह्मणैः सह ।
प्रीतिस्निग्धविशालाक्षः सप्रणाममभाषत ॥ ४२ ॥
राजा वेगवतीमाह प्रत्यासन्नकरग्रहाः ।
चतस्रः किल तिष्ठन्ति भगिन्यः कन्यकास्तव ॥ ४३ ॥
ममाप्यकृतवीवाहा युवानो रम्यदर्शनाः ।
पुत्रास्तिष्ठन्ति चत्वारः शस्त्रशास्त्रकलाविदः ॥ ४४ ॥
यदि संबन्धयोग्यान्नो मन्यते राजदारिका ।
ततस्ता दारिकास्तेभ्यः पुत्रेभ्यो मे ददात्विति ॥ ४५ ॥
तयोक्तं धीरगणिकावक्त्रसंक्रान्तवाक्यया ।
देवेनानुगृहीतास्मि प्रसादैः फलितैरिति ॥ ४६ ॥

33. ujvalā B ujvalī *m.* — 34. kathayātayā *m.* — 37. -āniṣṭham B; āṃsakya B āṃçaṃkya *m.* — 38. kāṣṭā *m;* mānaṣavegena B mānaṣaveçena *m.* — 39. svayam *peu lisible* (*effacé et noirci*) *dans* B; sakhī B. — 41. jhagati B jagati *m;* svargānu- *m.* — 42. visālā- B. — 43. -grahā. — 44. putrātiṣṭhanti B. — 45. tataḥtāḥkanyakās B tataḥtāḥdārikās *m.* — 46. tayoktandhīra- *ou* -vīra- B; -gaṇi-vaktramaṃtrāṃta- *m;* prāsādaiḥphalitair B prāsādairhasitair *m.*

अभूच्च दारिकापक्षे तदा देवी कनीयसी ।
अहं च वरपक्षे तु तातः सान्तःपुरो ऽभवत् ॥ ४७ ॥
या समृद्धिस्तदा दृष्टा वत्सराजकुले मया ।
तामद्यापि न पश्यामि प्राप्यापि श्रियमीदृशम् ॥ ४८ ॥
विद्याधरकुमारीणां ततो हरिशिखादयः ।
अग्रहीषत सस्वेदानम्भोरुहरुचः करान् ॥ ४९ ॥
निवर्तितविवाहास्तु राजराजसुता इव ।
राजराजगृहाणीव गताः पितृगृहाणि ते ॥ ५० ॥
प्रभाते तानहं प्राप्तान् सव्रीडानिव पृष्टवान् ।
याता यस्य यथा रात्रिः स तथा वर्णयत्विति ॥ ५१ ॥
गोमुखेन ततः प्रोक्तमुच्चैस्ताडितपाणिना ।
तथैतेषां गता रात्रिर्मा स्म गच्छत्तथा पुनः ॥ ५२ ॥
अयं हरिशिखस्तावत्कान्ताराधनकोविदः ।
अपेहि मन्त्रिपुत्रेति भार्यया भर्त्सितः भृशम् ॥ ५३ ॥
ततः शय्यां समालिङ्ग्य कूर्मसंकोचपिण्डितः ।
दारुणामनयद्रात्रिं निद्रयापि निराकृतः ॥ ५४ ॥
अयं तु घट्ट्यमानो ऽपि भार्यया मरुभूतिकः ।
शूरो ऽहमिति भार्यायाः पादस्थानं न मुक्तवान् ॥ ५५ ॥
तपन्तकः पुनः शय्यां त्यक्त्वा सुप्तो महीतले ।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ ५६ ॥
तदेवं दुर्भगानेतान्कान्तासंगमकातरान् ।
प्रगल्भा रमयिष्यन्ति कथं विद्याधराङ्गनाः ॥ ५७ ॥
ततो हरिशिखेनोक्तमहो नागरको भवान् ।
भार्यया यो ऽतिसौभाग्याद्गृहादपि निराकृतः ॥ ५८ ॥
यो हि वासगृहे सुप्तः प्रीतया सह कान्तया ।
स कथं परवृत्तान्तैः क्षपां क्षपितवानिति ॥ ५९ ॥

47. sarīkā *m;* nātaḥ *m.* — 48. sāsamṛddhis B māsavṛddhis *m;* dṛṣṭvā *m;* īdṛça B. — 49. agrahidyena *m.* — 50. rājarājasavā *m.* — 52. tata B. — 53. aham *m;* apaihi B avaihi *m;* mitraputre- *m;* nāryayo *m.* — 54. dārunenaya-drātrim *m.* — 55. dyadyamāno *m.* — 56. puna B; trāyām *m;* prakṣālanādvipaṅkasya B; arsparçanam B. — 57. vidyādharāgaṇāḥ B -gaṇā *m.*

तथोपहसतामेषामापानैरपयन्त्रणैः ।
रममाणाः क्षणं स्थित्वा समुत्थानमाचरम् ॥ ६० ॥
अथापरस्मिन्दिवसे वेगवत्या निमन्त्रिताः ।
सभार्याः सुहृदस्ते ऽपि ताभिरेव सहागताः ॥ ६१ ॥
मयोक्तं यस्य यस्यास्य पानं सह न दुष्यति ।
स तया सा च तेनैव पानमासेवतामिति ॥ ६२ ॥
भार्यां हरिशिखस्यापि पाणावाकृष्य गोमुखः ।
शोभाजितमृणालिन्यां पानभूमावुपाविशत् ॥ ६३ ॥
भार्यया गोमुखस्योक्तं यदि सभ्यः स्वयंग्रहः ।
गृहीतस्तर्हि निःशङ्कं मया हरिशिखः स्वयम् ॥ ६४ ॥
आसीनायां ततस्तस्यां तेन सार्धमनन्तरम् ।
तपन्तकस्य गृहिणीमगृह्णान्मरुभूतिकः ॥ ६५ ॥
मरुभूतिकभार्या तु समुपेत्य तपन्तकम् ।
अब्रवीत्परिशेषो ऽयं किमभ्यात्क्रियतामिति ॥ ६६ ॥
एवं सह सुहृद्दारैः सुहृदः शुद्धबुद्धयः ।
वयं च सहिता दारैः क्रीडन्तः सुखमास्महि ॥ ६७ ॥
कदाचित्कुपिता मह्यं येन केनापि हेतुना ।
मयानुनीयमानापि सुप्ता वेगवती पृथक् ॥ ६८ ॥
जागरित्वा चिरं सुप्तस्ततो ऽहं गाढनिद्रया ।
सहसा प्रतिबुध्य स्फुरल्लोचनतारकः ॥ ६९ ॥
उन्मील्य च चिरान्नेत्रे बालनिद्राकषायिते ।
केनाप्यपश्यमात्मानं नीयमानं विहायसा ॥ ७० ॥
अमरासुरगन्धर्वपिशाचप्रेतराक्षसाम् ।
को नु मा नयतीत्यासं संदेहाधीनमानसः ॥ ७१ ॥

60. -opasahatām B -opasaṃhatām *m;* apapatraṇaiḥ *m.* — 61. nimantritā. — 62. teneva B[1]. — 63. pāṇāvikrṣya *m;* sobhā- B; -bhūmāvupāvisat B -bhūmāvrayaviçat *m.* — 64. niḥsaṃkaṃ B nīḥçaṃkaṃ *m.* — 66. ātravīt *m.* — 67. suddha- B. — 68. kupito *m.* — 69. ṣuptas B; gurallo- B. — 70. apasyam B.

60. Apayantraṇaiḥ : apa = a = niḥ, cf. niryantraṇa «sans frein», «sans gêne».
63. Api : c'est la femme de Hariçikha — *rien de moins !* — que Gomukha prend par la main. Api souligne l'audace de Gomukha. Hariçikha est futur premier ministre, Gomukha n'est que le bouffon du prince.

देवादीनामयं स्पर्शो चपर्योर्न हि विद्यते।
तस्माद्विद्याधरेणाहं गृहीतो दुष्टबुद्धिना ॥ ७२ ॥
शत्रुहस्ते गतस्यापि क्षत्रियस्य न शोभते।
हस्तपादास्त्रभिन्नस्य पङ्गोरिव मुधा वधः ॥ ७३ ॥
तस्मादहं यथाशक्ति व्यायम्य द्विषता सह।
मरिष्यामीति निर्धार्य तं ताडयितुमुद्यतः ॥ ७४ ॥
अथ तेन विहस्योक्तं साधु क्षत्रियकुञ्जर।
स्वस्याः सुसदृशं जातेः कर्म व्यवसितं त्वया ॥ ७५ ॥
वन्ध्यस्तु तव संकल्पः फूत्कारो वासुकेरिव।
मन्त्रयन्त्रितवीर्यस्य तस्माच्चिन्तय देवताम् ॥ ७६ ॥
प्रीतश्चास्मि तवानेन शौर्यशौण्डेन चेतसा।
तस्माद्ददामि तेऽभीष्टं द्वयोरन्यतरं वरम् ॥ ७७ ॥
ब्रूहि किं म्रियसे दृष्ट्वा प्रियां मदनमञ्जुकाम्।
किं महासागराधारैः पाठ्यसे मकरैरिति ॥ ७८ ॥
मम त्वासीन्मृणालीव चिक्खिल्लात्कलुषादियम्।
अरातेरपि निर्याता भारती स्वच्छकोमला ॥ ७९ ॥
यदि नाम प्रियां दृष्ट्वा व्यसेयं कायशृङ्खलाम्।
ततो मे शत्रुमित्रेण भवेदुपकृतं महत् ॥ ८० ॥
यं यमेव स्मरन्भावं त्यजत्यन्ते कडेवरम्।
तं तमेव किलाप्नोति तदा तद्भावभावितः ॥ ८१ ॥
यस्तु पश्यन्पुरः प्रीत्या प्रियां प्राणैर्वियुज्यते।
तयानन्तरमेवासौ सुकृती संप्रयुज्यते ॥ ८२ ॥

72. hi *om.* B. — 73. satruhasta B; paccor *m;* mupā B. — 74. vyāyamyaṃ: tātrayitum B tāḍapitum *m.* — 75. kuñjaraḥ; vyasitaṃ B. — 76. phut- *m;* yaṃt-tavāyasya *m.* — 77. sauṇḍena B; te'ṣṭabhiṣṭaṃ B *corr.* B[1]. — 78. mrīyase *m;* pādyase *m;* makarer. — 79. cikkhilāt B ciṅkhilāt *m;* arāterivaniyāṃtā *m.* — 80. -sṛṅkhalāṃ B. — 81. kaḍemvaraṃ B; -āproti *m.* — 82. yattu *m;* yasyan B paçyet *m;* nayā B[1].

79. On pourrait lire presque aussi bien pāṭhyase, la confusion entre ṭa et ṭha étant constante; le sens (ironique) serait : «prendre des leçons» (des monstres marins).

79. Cikkhilāt : «boue»; cf. cikila, cikhilla, cikkhilla (cikkhalla *Hem.*, *Deçīn.*, IV, 15), tous mots de lexique. Il n'y a aucune raison de ne pas conserver la graphie de B. Le même mot est écrit cikkhalla XVIII, 345.

81. kaḍevaram = kalevaram.

इति संकल्पयन्नेव रणन्तीं किङ्कणीमधः ।
शृणोमि स्म प्रभातेन्दोः पश्यामि स्म तनुप्रभाम् ॥ ८३ ॥
तां दिशं प्रहितापेण दृष्टा वेगवती मया ।
निवारवाणनिस्त्रिंशप्रभादर्शितचन्द्रिका ॥ ८४ ॥
पीवरक्रोधसंजातप्रज्वलज्ज्वलनद्युतिः ।
लोकानिव दिधक्षन्ती प्रलयानलसंततिः ॥ ८५ ॥
सान्द्रं मद्दर्शनादेव प्रीतिनिश्वसितानिलैः ।
क्रोधानलमविच्छिन्नैः सूक्तैश्च निरवापयत् ॥ ८६ ॥
अथांसयोः समासज्य नतयोरसिचर्मणी ।
मूर्ध्नि चाञ्जलिमाधाय लज्जादीनमभाषत ॥ ८७ ॥
वत्सराजसुतं दान्तमाकारेण तमीदृशम् ।
युवराजं महाराज मा वधीर्भगिनीपतिम् ॥ ८८ ॥
यथाहं तव मातुश्च तथायं मम वल्लभः ।
स्वदारसहितस्तस्माद्यतो मुच्यतामिति ॥ ८९ ॥
ततः समवलावेपो दष्टदन्तच्छदः स्फुरन् ।
स्वसारमब्रवीद्वाचा सिंहफूत्कारघोरया ॥ ९० ॥
स्वयंगृहीतनिर्वार्यधरागोचरभर्तृकाम् ।
धिक्त्वां शारदचन्द्राभमनःपुच्छिकपांसनीम् ॥ ९१ ॥
तस्याः पुरो निहत्यैनं यासौ मामवमन्यते ।
तां च त्वां च ततस्तस्य गमयिष्यामि पृष्ठतः ॥ ९२ ॥

83. raṇaṃtī *m;* kiṃkaṇīmradhah B[1] (B[a] *a corrigé* ra *en* ma (??); *la lecture est très douteuse, l'encre ayant beaucoup pâli*) kiṃkaṇīnayaḥ *m.* — 84. dṛṣṭvā *m;* nivāraṇanistriṃsa B nivāraṇa-nistriṃça *m.* — 85. didhakṣyaṃtī *m;* praṇayā- B. — 86. sāndra; nisvasitā- B; -ānilasavichinnaiḥ *m;* niravārayat *m.* — 87. -ānsayo B; dīnam *ex* vīnam B. — 89. mātusva B; sahitaṃ *m;* akṣatā *m.* — 90. -ākṣeyo B; -dattacchadaḥ B; spharan B; phutkāra *m.* — 91. -nirdhārya- *m;* sārada- B: yāṃsanīṃ B[1].

83. Kiṅkaṇī = kiṅkiṇī, *Scol.* ad *Hem., Abhidh.*, 665.

84. Nivārabāṇa- : cette correction comble sans difficulté la lacune; nivāra- = vāra-; vārabāṇa «cuirasse», bien attesté.

85. Pralayānala = pralayadahana.

91. -nirvārya- : on ne peut lire ni-, qui rendrait le vers faux; nirdhārya ne serait tentant qu'en raison de l'allitération avec dharāgocara. Nirvārya équivaut à avārya «que tu n'aurais pas dû choisir» (rien d'caceptable avec var-, vṛṇoti). Pour nir- = a-, cf. V, 127 et XVII, 4.

इदानीं निहतो ऽसीति सा भ्रातरमभाषत ।
तेनापि त्वरितेनाहमभ्रमध्ये निपातितः ॥ ९३ ॥
अथ वेगवती ध्यात्वा पुत्रविद्यामभाषत ।
भगवत्यार्यपुत्रो ऽयं स्वपुत्र इव रक्ष्यताम् ॥ ९४ ॥
वातमण्डलिकोत्क्षिप्तं यथा पत्त्रं भ्रमन्नमत् ।
शनैः शनैर्महीं यायात्तथायं नीयतामिति ॥ ९५ ॥
अथ निस्त्रिंशमुद्गूर्य निर्धर्माकरुणः खलः ।
हन्तुं वेगवतीमेव प्रवृत्तः प्रार्थितस्त्वया ॥ ९६ ॥
स्त्रीषु स्वसृषु बालासु लालितास्त्रुवचस्वि ।
निपतन्ति न निस्त्रिंशाः शूराणां त्वादृशामिति ॥ ९७ ॥
स तु वेगवतीमध्ये दुकूलस्पर्शभीरुके ।
वस्त्रस्यच्छिद्रादृपामसिधारां न्यपातयत् ॥ ९८ ॥
अथ वेगवतीरष्टौ प्रचण्डायुधमण्डलाः ।
अपश्यं युद्धसंनद्धाश्चण्डिकागणिका इव ॥ ९९ ॥
एकमानसवेगस्य मध्यं कुलिशकर्कशम् ।
रक्षास्तम्भमिवासारमलुनादसिधारया ॥ १०० ॥
ततो मानसवेगौ द्वौ विकरालाविमासुरौ ।
उत्पन्नौ सकाशावेव शरीरशकलद्वयात् ॥ १०१ ॥
एका वेगवती छिन्ना भवन्त्यष्टौ तथाविधाः ।
तथा मानसवेगौ द्वौ प्रागल्भेतामितस्ततः ॥ १०२ ॥

93. nihito B; tvāritenā- *m;* -āhamprabhramapyanipātitaḥ *ex* -prabhramapyanipātiyātaḥ B -āhamputramapyatipātitaḥ *m.* — 94. rakṣatām. — 95. -otkṣiptām B -otkṣipta *m;* patram B putram *m;* sanaiḥsanair B; mahīyāyāt B mahāpāpāt *m.* — 96. nistriṃsam B; hatum *m;* prārthitasvayā *m.* — 97. svasṛsṛṣu B; nipatati *m;* nistriṃsāḥsūrāṇām B. — 99. -maṇḍalā B; apasyam B; -sannāhāç *m.* — 100. mānaṣa-. — 101. mānaṣa-; 101bcd *om. m.* — 102. 102abc *om. m;* mānaṣa-; pragalbhātām.

95. Vātamaṇḍalika = vātamaṇḍalī «tourbillon de vent», *Trikāṇḍaçesa*, I, 1, 80.

99. Chaque moitié de Vegavatī devient quatre Vegavatīs entières tandis que chaque moitié de Mānasavega ne deviendra qu'un Mānasavega entier : le pouvoir magique de Vegavatī est quadruple (cf. XIV, 76).

100. Alunād : sujet sous-entendu : Vegavatī (au singulier, bien qu'elle soit huit!); ou bien il faut donner un sujet au verbe en lisant ekā.

102. La phrase est très elliptique. Elle signifie certainement que chaque Mānasavega tranché devient deux Mānasavegas entiers. On pourrait couper la phrase après dvau et, au lieu de corriger pragalbhātām des mss. en prāgalbhetām (de pra-galbh-), rattacher 102d à 103, et lire pragalbhānām (Mānasavegānām).

एवं मानसवेगानां वृन्दैरम्बरमावृतम् ।
यथाद्वेगवतीनां च युध्यमानैश्चतुर्गुणैः ॥ १०३ ॥
अहं तु तन्महायुद्धं पश्यन्नेव शनैः शनैः ।
प्रोषिताक्षि गभीरे पतितः कूपसागरे ॥ १०४ ॥
ततस्तीव्रविषादो ऽपि विह्वलः स्मृतवानिदम् ।
संजयस्य वचः कष्टे वर्तमानस्य संकटे ॥ १०५ ॥
धृष्टद्युम्नादहं मुक्तः कथंचिच्छ्रान्तवाहनः ।
पतितः सात्यकानीके दुष्कृती नरके यथा ॥ १०६ ॥
कथं दुस्तरादस्मान्मोक्तारो भवेदिति ।
उपायं चिन्तयन्नेव स्मरामि स्म कथामिमाम् ॥ १०७ ॥
बभूवुर्भ्रातरः केचित्त्रयो ब्राह्मणदारकाः ।
एकतः पूर्वजस्तेषां मध्यमाख्यो द्वितस्त्रितौ ॥ १०८ ॥

104. pasyann B; sanesaneh B[1] sanairsanaih B[2]. — 105. smṛtavādinam. — 106. dhṛṣṭadumanād B pṛṣṭamnāmanād *m;* duskṛtīna- B duskṛtīnna- *m.* — 107. cimtayetteva *m.*

106. Variante de *Mahābhārata,* IX, 1392cd-1393ab : Dhṛṣṭadyumnād aham muktaḥ katnamcic chrāntavāhanāt || patito mādhavānīkam duṣkṛtī narakam yathā |. A la suite de cette aventure, Saṃjaya est fait prisonnier par Sātyaki. La formule citée devait être proverbiale comme «tomber de Charybde en Scylla». La leçon krāntavāhanaḥ vaut bien çrāntavāhanāt attendu que c'est Saṃjaya qui a lâché pied; mais Sātyaka- est substitué à Mādhava- pour plus de clarté.

108 et suivants : Trita dans le puits; cf. entre autres *Ṛg-Veda,* I, 105, 17 (et le commentaire de *Sāyaṇa* rapportant la tradition des Çāṭyāyanins) : Tritáḥ kū́pe 'vahito devā́n havata ūtáye | tác chuçrāva Bṛhaspátiḥ kṛṇvánn aṃhūraṇā́d urú...; *Bṛhaddevatā,* III, 132 : Tritam gās tv anugacchantam krūrāḥ Sālāvṛkīsutāḥ | kūpe prakṣipya gāḥ sarvān tata evāpajahrire; *Mahābhārata,* IX, 36, 7 et suivants; *Jaiminīya-Brāhmaṇa,* I, 184 (H. Oertel, *J. of the American Or. Soc.,* XVI [1896]); voir aussi A. A. Macdonell, *J. of the R. As. Soc.,* XXV (1893), p. 480 et suiv., et Geldner, *Vedische Studien,* III, p. 170 et suiv. Dans le *Mahābhārata,* Trita tombe dans le puits, creusé près du bord de la Sarasvatī, en fuyant pour échapper à un loup; ses frères l'y abandonnent pour voler les vaches; Trita offre en esprit le sacrifice de Soma; Bṛhaspati l'entend; la Sarasvatī pénètre dans le puits et soulève Trita jusqu'à l'ouverture; les dieux lui accordent le souhait qu'il formulera : il maudit ses frères, qui sont changés en loups (cf. *Bṛhaddevatā*). Selon *Sāyaṇa,* les trois frères dans une contrée sans eau trouvent un puits; Trita y descend, puise de l'eau pour ses frères; ceux-ci ferment l'ouverture avec une roue de char et se sauvent avec les vaches; Trita invoque les dieux et «voit» l'hymne I, 105. Dans le *Jaiminīya-Brāhmaṇa* histoire analogue : Trita «voit» le traita-sāman qui sert à acquérir des troupeaux et à vaincre les ennemis; mais c'est Parjanya qui le délivre en faisant tomber une pluie qui remplit la fosse et soulève la roue. Ce détail est plus rapproché de la version de notre texte. Jusqu'ici l'histoire de Trita ne s'était rencontrée que dans des textes où l'influence scolastique est manifeste; on pouvait sou-

तैस्ताधीतत्रयीविद्यैर्गुरुर्विज्ञापितः किल ।
गुरवे दातुमिच्छामः काङ्क्षितां दक्षिणामिति ॥ १०९ ॥
तेनोक्तं स्वगृहान् गत्वा कृत्वा दारपरिग्रहम् ।
उत्पाद्यतामपत्यं च क्रतुभिरिज्यतामिति ॥ ११० ॥
तैरुक्तमपरा काचिद्दक्षिणा मृग्यतामिति ।
तेनोक्तमलमेतेन ग्रहेण भवतामिति ॥ १११ ॥
तस्मान्नैवातिनिर्बन्धान्निवर्तन्ते स्म ते यदा ।
तदा क्रुद्धेन गुरुणा याचिता दक्षिणामिमाम् ॥ ११२ ॥
एकतः श्वेतकर्णानां गवां कोकिलवर्चसाम् ।
कुम्भोध्नीनां सहस्रं मे दत्त यात च मा चिरम् ॥ ११३ ॥
ते तु भ्रान्त्वा महीं कृत्स्नामारूढास्तुहिनाचलम् ।
ख्याताः किल कुबेरेण कौबेरीं प्रस्थिता दिशम् ॥ ११४ ॥
कुबेरस्यापि किं नास्ति तेन ते गुरुदक्षिणाम् ।
दत्त्वा प्रस्थापिताः प्रीतास्तुहिनाद्रेरवातरन् ॥ ११५ ॥
संचरन्तो बहून्देशांश्चारयन्तश्च गाः शनैः ।
प्राप्ताश्चण्डेश्वरासन्नाश्चण्डार्ककिरणाः स्थलीः ॥ ११६ ॥
कदाचिदेकतेनोक्तौ गाः संप्रेक्ष्य द्वितत्रितौ ।
लोभनीयमिदं द्रव्यं न परित्यागमर्हति ॥ ११७ ॥
साधुकारश्रुतेर्लुब्धः कश्चिदुन्मत्तको यथा ।
अग्निप्रवेशं कुर्वीत तथेदं नश्चिकीर्षितम् ॥ ११८ ॥

108. madhyamāntau B -mātau *m;* dvitantritau. — 109. viddhyair B; kilaḥ B. — 110. aparyaṃ *m.* — 112. -ānitirbaṃdhān *m.* — 113. sveta- B. — 114. disaṃ B. — 115. datvā; acātaram *m.* — 116. desāṃç B; gāsanaiḥ B çāsanaiḥ *m;* sthalī. — 117. dravyau B.

tenir qu'elle n'était qu'une invention d'école destinée à expliquer *R.-V.*, I, 105, 17 (voir Macdonell, *l. laud.*); mais si telle était son origine, comment se fût-elle vulgarisée au point de figurer dans notre *Çloka-Saṃgraha*, si étranger par ailleurs aux spéculations védiques? Cette considération appuie fortement l'opinion de Geldner qu'il y a là un thème de conte populaire dont la donnée essentielle est empruntée à la réalité.

109-115 : toute cette partie de l'histoire appartient en propre à notre auteur.

114 Kauverīṃ : kauvera, adj. dérivé de Kuvera, nouveau mais normal.

116. Caṇḍeçvarāsannāç... sthalīḥ : il s'agit vraisemblablement d'un caṇḍeçvaratīrtha (Caṇḍeçvara est un nom de Çiva). Le *Mahābhārata* invite à le situer du côté de la Sarasvatī, dans la direction du Sud-Ouest, région chaude et sèche (cf. l'épithète). Si l'on pouvait penser que notre texte est népâlais, on serait tenté de songer à Caṇḍeçvarī, une des Durgâs népâlaises, qui a pour résidence la vallée de Banepa, à l'Est du Népâl (S. Lévi, *Le Népal*, I, 378); mais on vient de nous dire que les voyageurs ont parcouru un long chemin depuis le Himālaya.

तेनेदमुपपन्नं च गुरुणा च मयोदितम् ।
रमणीयविपाकं च वाक्यं नः क्रियतामिति ॥ ११९ ॥
अथोवाच द्विजः प्रीतो युक्तमार्येण चिन्तितम् ।
न हि स्वार्थेषु मुह्यन्ति बुद्धयस्त्वादृशामिति ॥ १२० ॥
एकतस्तु स्थितं दृष्ट्वा तूष्णीमासीनमुक्तवान् ।
यदत्र युक्तं तद्ब्रूतां किमुदास्ते भवानिति ॥ १२१ ॥
तेनोक्तं निन्दितं कुर्वन्न कश्चिन्न निवार्यते ।
पितापि हि विषं खादन्नैव पुत्रैरुपेक्ष्यते ॥ १२२ ॥
तेन विज्ञापयामि त्वां क्रियतां च वचो मम ।
बुद्धिवृद्धेन हि ग्राह्यं बालादपि सुभाषितम् ॥ १२३ ॥
अनार्यप्रियमार्येण न कार्यं कार्यमीदृशम् ।
कार्यं चेदाह्यमात्मीयमंशमार्यः प्रयच्छतु ॥ १२४ ॥
तमहं गुरवे दत्त्वा दक्षिणार्थोपकारिणे ।
प्रतिज्ञाभारविक्षेपाल्लप्स्यामि लघुतामिति ॥ १२५ ॥
ततः क्रुद्धौ च लुब्धौ च कनिष्ठं ज्येष्ठमध्यमौ ।
दुग्धगर्धान्धबुद्धित्वात्प्रमापयितुमिच्छतः ॥ १२६ ॥
तैः कदाचित्पिपासान्धैः पान्थसंघातसंकुलम् ।
अदृश्यमानपानीयं दृष्टं कूपरसातलम् ॥ १२७ ॥
जलमत्रास्ति नास्तीति संदेहविनिवृत्तये ।
तेषामन्यतमः पान्थः कूपे लोष्टुमपातयत् ॥ १२८ ॥
ततः ष्वादिति कृत्वा तज्जर्जरं घटकर्परम् ।
बभञ्ज स च संदेहः पथिकानां न्यवर्तत ॥ १२९ ॥
अवतीर्य ततः कूपं त्रितः करुणयावृतः ।
पान्थैरुत्तारयामास रज्जुभिर्भाण्डमण्डलम् ॥ १३० ॥

119. guruṇācca B guruṇāṃca *m.* — 120. dvijaḥ *m.* — 122. viṣāvādan *m.* — 124. prayacchatuḥ B. — 125. guruve B; datvā; vikṣepodyāsyāmi *m.* — 126. kaniṣṭa *m;* jyeṣṭa-. — 128. loṣṭam B. — 129. svādibhiḥ *m;* kṛtvājarjaram; nyavarttataḥ B. — 130. kupāttataḥ *m;* pāthairuttārayāmāsu *m.*

128. Loṣṭum : loṣṭu = loṣṭa *Hem., Abhidh.*, 970.

129. Ṣvād : onomatopée à relever : bruit mou que fait le tesson en se brisant dans l'eau boueuse. Autres onomatopées nouvelles : II, 29; XVIII, 466. — Babhañja : il est inutile de rétablir le moyen : l'emploi de l'actif au sens intransitif n'est pas sans exemple, quoique rare.

तेन चावयोः पान्थाश्च भ्रातरौ च महात्मना ।
उत्तार्योत्तार्य पानीयं छाताः स्नापितपायिताः ॥ १३१ ॥
पथिकेषु तु यातेषु छलार्थावेकतस्थितौ ।
कूप एव चितं त्यक्त्वा सगोयूथौ पलायितौ ॥ १३२ ॥
चितस्तु घटमालोक्य रज्ज्वैव सह पातितम् ।
निराशश्चिन्तयामास क्षणमुत्तारकारणम् ॥ १३३ ॥
अहं स्मृतं सख्यमित्युक्त्वा पेटवृत्तान्तपेशलः ।
माहेन्द्रीमकरोद्दिष्टिं मनसैव महामनाः ॥ १३४ ॥
अथानन्तरमुन्नम्य निशीथध्वान्तकर्बुराः ।
धनुष्मन्तस्तडित्वन्तो घना जलमपातयन् ॥ १३५ ॥
शनकैः शनकैः कूपात्पूर्यमाणान्नवाम्बुभिः ।
प्रतरन्प्रतरन्धीरं गोलेह्यादुत्थितस्ततः ॥ १३६ ॥
गत्वा च स्तोकमध्वानं गोखुरालीं निरूपयन् ।
अपवर्गमिवाद्राक्षीन्मूर्तिमन्तं चिराज्जिनम् ॥ १३७ ॥
अभिवाद्य तमप्राक्षीन्मार्गे भगवता क्वचित् ।
न दृष्टावेवमाकारौ सगोयूथौ द्विजाविति ॥ १३८ ॥
तेनोक्तं न मया दृष्टौ तौ महापापकारिणौ ।
यौ त्वां पातालगम्भीरे कूपे भ्रातरमौज्झताम् ॥ १३९ ॥
प्रष्टव्यावपि न क्षुद्रौ द्रष्टव्यावपि न त्वया ।
यावेवं निन्दिताचारौ प्रष्टव्यौ कुत एव तौ ॥ १४० ॥

131. pātthaç B pāṃthaç *m;* uttārottārya B; snāpisahapātitaṃ *m* (cf. 133). — 132 *om. m;* goyūtho B. — 133. 133ab *om. m;* nirāsaç B. — 134. -pesalaḥ B; akarodṛṣṭaṃ B[1] (B[2] *a ajouté* i *entre les caractères* ro *et* dṛ, *d'où résulte* akaroddiṣṭaṃ, *la différence entre le caractère* dda *et le caractère* dṛ *étant à peu près nulle dans l'écriture de* B) akaroddṛṣṭiṃ *m;* mahāmanā B. — 135. nisītha- B niçīthe- *m;* dhanusmantas B. — 136. sanakaiḥsanakaiḥ B; pūrṇṇamānān B pūryamānān *m;* prataratvīraṃ *ou* -ranvīraṃ *ou* -randhīraṃ B; golehad *m;* uttitāstataḥ *m.* — 137. gokhurālīrni- *m;* ayavarggam B; mūrttimattaṃ B. — 138. bhavatā B; evamācārau *m.* — 139. trāṃtaramaujhatau *m.* — 140. praṣṭavyāmapi B; kṣadrau *m;* yāveyaṃ *m.*

135. Dhanuṣ- = indradhanuṣ-.

136. Dhīram : «fermement, sans s'émouvoir», cf. XVI, 15. On pourrait aussi songer à faire de ce mot un complément des participes, avec le sens de «gouffre».

Golehyād : d'un tel niveau qu'une vache aurait pu y boire, à fleur de sol.

तमुवाच यतिः क्रोधाद्धूर्तं कलुषमानसम् ।
दुष्टमस्करिणं धिक्त्वां साधुनिन्दाविशारदम् ॥ १४१ ॥
ज्ञानेन्दुकिरणव्यस्तसंमोहध्वान्तसंचयाः ।
तादृशा एव जानन्ति साधवं न भवादृशाः ॥ १४२ ॥
ततस्तस्य परिव्राजः शुचिताम्रघटाननम् ।
जातं विकासितज्योतिः किरीटाभरणं शिरः ॥ १४३ ॥
शरीरं च सहस्राक्षं करं च कुलिशाकुलम् ।
इत्येवमादिवाकारः स जातः सर्वथा हरिः ॥ १४४ ॥
वरं ब्रूहीति तेनोक्तास्त्रितस्तुष्टस्तमब्रवीत् ।
भ्रातरौ मे सपापौ चेदपापौ भवतामिति ॥ १४५ ॥
पुनर्ब्रूहीति तेनोक्तः पुनरप्यब्रवीत्त्रितः ।
गुरू मे गुरवे गास्ताः प्रीतौ वितरतामिति ॥ १४६ ॥
पुनः प्रीततमेनोक्तं हरिणा याच्यतामिति ।
पर्याप्तमिति तेनोक्ते प्रीतः शक्रो दिवं ययौ ॥ १४७ ॥
एवं महेन्द्रदेवत्यामिष्टिं निर्वर्त्य मानसीम् ।
तस्मात्पातालगम्भीरादवटादुत्थितस्त्रितः ॥ १४८ ॥
तथाहमपि तामिष्टिं किं न कुर्यां मनोमयीम् ।
याजकैस्तु विना यज्ञं क्षत्रियस्य विरुध्यते ॥ १४९ ॥
तस्मादस्मादुपायेन केनोत्तिष्ठेयमित्यहम् ।
इति चति च निर्धार्य स्मृत्वामितगतिं गतः ॥ १५० ॥
शङ्कुबन्धनमुक्तेन तेनाहं याचितस्तदा ।
कष्टामापदमापन्नो विधये मां स्मरेरिति ॥ १५१ ॥

141. dhūrta *m;* -maskaraṇam *m;* -nindya- B; visāradam B. — 142. dhvānta *om. m;* sādhavo; bhavatodrçāḥ *m.* — 143. sucitāmmra- B sūcitābhra- *m;* jānam *m.* — 145. tustastam B tuṣṭasām *m;* ṣapāpau B. — 146. punaratha-bravīt *m;* viratatām B. — 147. punar B. — 148. eva; māhendra-; -devatyām B[1]; nirvatya B nirvṛrtya *m.* — 149. yājakaiçca *m*; kṣatrayasya *m.* — 151. saṃku- B; -muktenastena B; kaṣṭamāpanno (*om.* -āmāpada-) *m;* viṣaye *m;* smarediti.

142. Sādhavam : la correction me parait s'imposer à cause de 141d. Sādhava est formé conformément à *Pāṇini*, V, 1, 122.

144 : Hariḥ : c'est Indra.

151. Vidhaye «pour l'exécution (de tes ordres)» me parait donner un meilleur sens que viṣaye.

असोढप्रार्थनादुःखं वरं त्यक्तं शरीरकम् ।
न तु प्रत्युपकाराशावजाजर्जरितं धृतम् ॥ १५२ ॥
एवं च चिन्तयन्नेव कूपे कूपतरोस्तले ।
अपश्यमहमात्मानं तं चामितगतिं पुरः ॥ १५३ ॥
मां चावोचत्स वन्दित्वा हर्षघर्घरया गिरा ।
युष्मत्स्मरणपूतो ऽयं जनः किं कुरुतामिति ॥ १५४ ॥
खे संग्रामयमाणायाः सह भ्रात्रा बलीयसा ।
वेगवत्याः सहायत्वमाचरेति तमादिशम् ॥ १५५ ॥
ततोत्तमर्त्यदुहितुर्वेगवत्याः सहायताम् ।
कर्तुमिच्छति यो मोहान्महागौरीं स रक्षति ॥ १५६ ॥
आज्ञा तु प्रथमं दत्ता कर्तव्यैवानुजीविना ।
आज्ञासंपत्तिमात्रेण भृत्याद्भर्ता हि भिद्यते ॥ १५७ ॥
तावत्सरोजजलजध्वजवज्रलक्ष्म्या
त्वत्पादपङ्कजयुगं न नमामि यावत् ।
शत्रोर्गलन्नलसिरारुधिरेण मूर्ध्ना
नाभ्यर्चितं मदसिलूनशिरोधरेण ॥ १५८ ॥

इति वेगवतीलाभो नाम पञ्चदशः सर्गः ॥ १५ ॥

152. -āsū-. — 153. apasyam B; ahamāt- *sur grattage de* ahatmāt- B. — 154. girāḥ B: yusmatsmaraṇa- B *sur grattage de* yusmatsamaraṇa-. — 155. çe *m;* saṃgrāmayamānāyāḥ; balīyase *m;* ācāreti *m.* — 156. -gaurī *m.* — 157. bhṛtyād- *ex* bhṛtyod- B. — 158. lakṣmya B; satror B; -arcita *m;* -siro- B.

iti *om.* B; nāmaḥ B; pañcadaça B.

153. On songerait volontiers à kūlataros et même à kūle kūlataros («je me vis (hors de la fosse) sur le bord» etc...); mais ce serait à tort. Il veut dire qu'un arbre, qui s'élève dans le puits, lui fournit le moyen de sortir sans aide; il n'aura donc pas la honte d'avoir sollicité Amitagati.

158. Amitagati veut dire qu'il ne lui rendra pas hommage avec les attributs de la souveraineté tant que... etc.

Mètre : vasantatilakā.

# XVI

अथासौ मामवन्दित्वा निस्त्रिंशकरकङ्कटः ।
आरोहदम्बरं काले मन्देन्दुग्रहचन्द्रिके ॥ १ ॥
तं चोत्पतन्तमाकाशं शरं वालम्बितत्वरम् ।
न पृच्छामि स्म पन्थानं देशं नगरमेव वा ॥ २ ॥
गाहमानश्च वल्मीकस्थाणुकण्टकसंकटाम् ।
अटवीं सिंहमातङ्गपुण्डरीकाकुलामगाम् ॥ ३ ॥
अथामितगतिक्रोधवह्निभासेव भासिताम् ।
अपश्यं लोहितायन्तीं प्राचीमरुणशोचिषा ॥ ४ ॥
कंचिच्चाध्वानमाक्रम्य देशे नातिघनद्रुमे ।
विवादिध्वनिघण्टानामपश्यं मण्डलं गवाम् ॥ ५ ॥
अनुमाय ततस्तेन वसन्तं देशमन्तिके ।
जाताश्वासमतिर्गच्छन् क्षणेनारण्यमत्यजम् ॥ ६ ॥
तुषारसमयारश्मिभियेव कमलाकरान् ।
अपश्यं धूसरच्छायान् गच्छन् दिनकरोदये ॥ ७ ॥
अथालिकुलनीलाग्रविलसत्कुन्दकाननम् ।
आलवालपरिक्षिप्तमूलमुद्यानमासदम् ॥ ८ ॥
तत्र संमार्जनव्यग्रमुद्यानपरिचारकम् ।
पृष्टवानस्मि कस्येदमुद्यानमिति सोऽब्रवीत् ॥ ९ ॥

1. athasau B; nistrimsa- B; -kaṇṭakaḥ *m*; maṃdeṃdragraha- *m*. — 2. tecot- *m*; saram B; deçaḥ *m*. — 3. sthānu B; kaṃtarka *m*; āṭavīṃ *m*. — 4. apasyaṃ B; socisā. — 5. -ādhvānam *ex* āghānam B -odyānam *m*. — 6. jātāsvāsa- B jātaç- vāsa- *m*; gacchat B. — 7. tusāra- B; dhūmara- *m*. — 8. vilasan B vilasana *m*; ālavāpari- *m*. — 9. upāghānaparicārakaṃ *m*.

1. -kaṅkaṭaḥ : on peut lire également -kaṇṭakaḥ «le sabre au bout des doigts».
2. Vā = iva.
3. -puṇḍarīka- : «tigre», *Amarakoça*, III, 4, 1, 11.
6. Deçam : une localité (habitée).

किं च देवकुमारो ऽपि दिव्यज्ञानामलाशयः ।
अस्मदादीनबोधान्धान् संदिहन्निव पृच्छति ॥ १० ॥
अथ वा किं न एतेन महात्मानो हि मादृशैः ।
क्रीडन्ति तेन देवेन स्वयं विज्ञायतामिति ॥ ११ ॥
अथ द्वितीयमुद्यानं रमणीयतरं ततः ।
प्रविश्यापश्यमुद्यानमन्दिरं तुङ्गतोरणम् ॥ १२ ॥
प्रविशामि स्म तत्राहमेको दौवारिकश्च माम् ।
अन्तरे वेत्रमाधाय तिष्ठेति द्वार्यधारयत् ॥ १३ ॥
अथावोचद्द्वितीयस्तं धिक्त्वां निर्बुद्धिचक्षुषम् ।
निवारयसि यो मोहादेनमम्बरचारिणम् ॥ १४ ॥
किं कदाचित्त्वया दृष्टः श्रुतो वा कश्चिदीदृशः ।
एवं वा प्रविशन्धीरं धरणीधीरधीरिति ॥ १५ ॥
तेनोक्तमननुज्ञातं भर्त्रा नारदमप्यहम् ।
विशन्तं नानुजानामि किं पुनः सौम्यमीदृशम् ॥ १६ ॥
अयं तु ध्रियमाणो ऽपि दिग्द्विजिगतिर्धीरतः ।
प्रविशत्येव पारुष्यमात्रसारा हि मादृशाः ॥ १७ ॥
अथ निष्कारणोत्कण्ठाकरमुद्यानमन्दिरम् ।
प्राविशं निस्वनद्वीणं विनीताडजपञ्जरम् ॥ १८ ॥
तत्रासीनं शिलापट्टे चित्रपट्टोपधानके ।
अपश्यममराकारं नरं नागरकेश्वरम् ॥ १९ ॥
उपसृत्य तमाभाष्य भोः साधो सुखमास्यते ।
कच्चिद्वा प्रत्यवेक्ष्यन्ते षड्छत्वः कला इति ॥ २० ॥

10. -āsayaḥ B; asmadādīnabodhātsaṃ- B -bodhānā-saṃ- *m.* — 11. na e etena *m.* — 12. ramaṇīyaparaṃ *m.* — 15. dharaṇīṃ; dhīradhīri B. — 16. visantam B; adanujhātaṃ *m.* — 17. aya B; -gātrasārā *m.* — 18. prāvisaṃ B; -vīnaṃ B; vinītāḍaja- *ex* vinitātraje- B vinītā-ja- *m.* — 19. çilāpaṭe B -paṭye *m;* citrapaṭo- B citrapadye- *m.* — 20. ābhāṣyeḥ B.

15. Dhīraṃ : adverbe, «sans s'émouvoir»; cf. XV, 136.

16. Nāradam api : personne cependant ne mériterait mieux d'être reçu que Nārada, le maître musicien (cf. la suite).

17. Pāruṣya- etc. : les portiers sont rogues mais leur hostilité n'est qu'en paroles, sans autre conséquence; aussi entre-t-il tout de même (praviçaty eva).

19. Upadhānaka «coussin» est attesté dans *Hemādri*. Cf. saṃpidhānaka «couverture», XIV, 94.

वीणाव्यासक्तचित्तत्वात्पश्यति स्म न मामसौ ।
अवक्षिप्तं हि कृत्यानि मनः पश्यति नेक्षणे ॥ २१ ॥
मया तु वर्जिता वीणा गृहीत्वार्घं यदा तदा ।
वीणातत्त्वपुराविद्य मयि निक्षिप्तवानसौ ॥ २२ ॥
ततः संभ्रान्तमुत्थाय संस्रमाणोत्तराम्बरः ।
मामुपावेशयत्प्रीतस्तस्मिन्नेव शिलासने ॥ २३ ॥
पादचारपरिश्रान्तमङ्गं संवाह्य मामकम् ।
प्रक्षाल्य च स्वयं पादौ दत्तार्घः समुपाविशत् ॥ २४ ॥
अनुयुक्तश्च स मया को ऽयं जनपदस्त्वया ।
भूषितः कतमश्चेदं पुरं संचरितैरिति ॥ २५ ॥
अथ तेन विहस्योक्तं संभाव्या नभसा गतिः ।
त्वादृशां देवपुत्राणामज्ञानं तु न युज्यते ॥ २६ ॥
यो हि देशान्तरं याति मुग्धो ऽपि धरणीचरः ।
अयतो भावितं देशं नापृष्ट्वा संप्रपद्यते ॥ २७ ॥
देशश्चन्द्रप्रकाशो ऽयं चन्द्रिकाप्रपाटा पुरी ।
न ज्ञाता पथिकेनेति दुःश्लिष्टमिव दृश्यते ॥ २८ ॥
तेनामरकुमारस्त्वमवतीर्णो विहायसः ।
अज्ञानच्छद्मना छन्नः क्रीडितुं मद्विधैरिति ॥ २९ ॥
अथाहं चिन्तयित्वेदमुत्तरानासमुक्तवान् ।
द्विजो ऽहं वत्सविषये वसतः पितरौ मम ॥ ३० ॥
सो ऽहं कर्णसुखाचारः कदाचिन्मन्त्रवादिनाम् ।
श्रुत्वा दारैरसंतुष्टो यक्षीं कांचिदसाधयम् ॥ ३१ ॥

21. -vyāçaktacintatvāt B; namānasau *m;* paçyasi *m;* vekṣaṇe. — 22. sayinihkṣiptavān *m.* — 23. tatasaṃdhrāṃtam *m;* çilātale *m.* — 24. parisrāntam B; sannupāvisat B çamupāviçat *m.* — 25. sayākoyaṃ *m;* saṃcaritair. — 26. nanamāgatiḥ *m;* devaputrāṇāṃ ajñānaṃ. — 27. nāvadhvāsaṃ- *ou* nāvudhvāsaṃ- (*peu lisible, effacé*) B nāva-saṃ- *m.* — 28. -prakāso B; pathikenesi *m;* duçliṣṭam. — 29. ajñāna...channaḥ *à peu près illisible dans* B (*effacé*). — 30. cintayatve- B[1]; visaye B.

21. Il ne serait pas impossible d'admettre vekṣaṇa «observation, examen», à cause de vekṣ- donné par le *Dhātupāṭha* comme synonyme de darç- (dans *Manu,* IX, 11, vekṣaṇe est une mauvaise lecture pour cekṣaṇe).

26. Tu : «mais» (s'il est venu par les airs) il est un être divin et dès lors il n'ignore rien. D'autre part, s'il est un voyageur terrestre, il ne saurait non plus ignorer où il est (27). De toute façon il est évident qu'il ment.

सा चाहं च ततः प्रीतौ शैले शैले वने वने ।
यद्वा यद्रुचितं तस्यै तत्र तत्रारमावहि ॥ ३२ ॥
चिन्तितं च मया रात्रौ न मे यक्ष्या प्रयोजनम् ।
पातालमन्त्रमाराध्य रमयाम्यसुरीमिति ॥ ३३ ॥
अथेर्ष्यादूषितधिया तयाहं यक्षकन्यया ।
आनीय नभसा न्यस्तः पुरे ऽस्मिन्भवतामिति ॥ ३४ ॥
तेनोक्तं न न संभाव्या यक्षरक्षःसु चण्डता ।
पश्चात्तापगृहीता तु न सा युष्मान्विमोक्ष्यति ॥ ३५ ॥
को ऽयं जनपदः ख्यात्का पुरीति च यदुच्यते ।
अङ्गा जनपदाः स्फीतश्चम्पा चेयं महापुरी ॥ ३६ ॥
अहं च दत्तको नाम वणिक्पौरपुरस्कृतः ।
प्रसिद्धः प्रियवीणत्वाद्वीणादत्तकनामकः ॥ ३७ ॥
अथाह्वयाब्रवीदेकं स कर्णे परिचारकम् ।
गाढं परिकरं बध्नन्धावमानः स चागमत् ॥ ३८ ॥
क्षणेन च परावृत्य श्वसितस्पन्दितोदरः ।
स्वामिप्रवहणं प्राप्तमिति दत्तकमब्रवीत् ॥ ३९ ॥
अथावतार्य मुदितः स्वाङ्गुलेरङ्गुलीयकम् ।
दत्तवान्दत्तकस्तस्मै शीघ्रप्रेषणकारिणे ॥ ४० ॥
कृताञ्जलिरथोवाच यक्षीकामुक धाव्यताम् ।
पावनैर्दासभवनं पादनिक्षेपणैरिति ॥ ४१ ॥
अथारुह्य प्रवहणं वीणादत्तकवाहकम् ।
गृहीतचारुसंचारं चम्पामभिमुखो ऽगमम् ॥ ४२ ॥
शृणोमि स्म च पौराणां जल्पतामितरेतरम् ।
चिरंजीवन्निराश्चर्यं पृथिव्यां किं न दृश्यते ॥ ४३ ॥

32. sailesaile B; tatraramāvahi. — 33. rātraumame *m.* — 35. saṃbhāvyo *m;* caṃḍatāṃ *m;* yusmān B; vimoksati *m.* — 36. syātkāvāpurītivayacaducyate B' -purītivayaducyate B" syādvāpurīticayaducyate *m;* asaujanapadaḥsphotañ *m.* — 37. vanik B; prasiddhaṃ. — 38. athāhvayā- (hva(?) *sur grattage*) B athājñayā- *m;* parikaraṃvadhūtvāvamānaḥ (tvā *en partie effacé*) B vadhranadhāvamānaḥ *m;* -āgamata B. — 39. svasita-. — 40. sīghra- B çīpra- *m.* — 41. yācyatā ‖ dhavanair *m.* — 43. jalpitām.

38. Parikaraṃ : cf. II, 61.
42. Viṇādattakavāhakam : il faut entendre que Dattaka sert lui-même de porteur (cf. 44).

क्व नागरकसेनानीर्दत्तकस्तुङ्गमस्तकः ।
क्व च कस्यापि पान्थस्य रज्जुभागे व्यवस्थितः ॥ ४४ ॥
अथापरेण तत्रोक्तमत एवायमुत्तमः ।
येन लोकोत्तमस्यास्य रज्जुभागे व्यवस्थितः ॥ ४५ ॥
आकारानुमितं चैतद्गुणसंभारभारिणः ।
ननु चास्य वसन्तोऽपि सारथ्येन विकत्थते ॥ ४६ ॥
दृष्टवान्परितस्त्वाहं क्वचिदुत्सृष्टलाङ्गलान् ।
हालिकान्हलमूलेषु वीणावादनतत्परान् ॥ ४७ ॥
क्वचिदुद्दामगोवर्गं वटे गोपालमण्डलम् ।
वितन्त्रीस्ताडयद्वीणाः कर्णशूलप्रदायिनीः ॥ ४८ ॥
आसन्नश्च पुरद्वारं विक्रयाय प्रसारिताम् ।
वीणावयवसंपूर्णामपश्यं शकटावलीम् ॥ ४९ ॥
विजर्जरितकर्णश्च वितन्त्रीध्वनिमुद्गरैः ।
व्यस्तपद्मनिधानाभं प्राप्नोमि स्म वणिक्पथम् ॥ ५० ॥
कुङ्कुमं क्रेतुमायातः कश्चिद्वाणिजमब्रवीत् ।
वीणाविक्षिप्तचेतस्को वीणा मे दीयतामिति ॥ ५१ ॥
चिरादाकर्ण्य तद्वाक्यं कुपितः स तमब्रवीत् ।
वणिजोऽन्ये किमुत्सन्ना येन खादसि मामिति ॥ ५२ ॥
एवं वर्धकिकर्मारकुलालवरुडादयः ।
निकृष्टजन्मकर्माणः सक्ता वीणामवादयन् ॥ ५३ ॥
अथ प्रायं चिरं द्वारं वीणादत्तकवेश्मनः ।
शातकुम्भमयैः कुम्भैरम्भोगर्भैः समङ्गलम् ॥ ५४ ॥

44. -senānīṃ *m;* tuṃgamustakaḥ *m;* rajjubhāro *m.* — 46. -ānumitaççetaguṇa- B -çvetuguṇa- *m;* vikathyate *m.* — 47. pariççāhaṃ *m;* -mūleṣvavīṇā *m.* — 48. kvaciddudāma- B; -govarga *m;* vitantrītāḍayadvīṇāḥ B vitaṃtrīṇāṃtupadvīṇāḥ *m*; -sūla- B; -pradāyinī *m.* — 49. -sāritaṃ *m;* -pūrṇam *m;* sakaṭāvalī B. — 50. vyaṣṭapadmanidhānāmaṃ- *m;* sma *om. m;* vaṇikṣathaṃ B. — 51. kuṃkupaṃ *m;* kretumāyātumāyātaḥ *m;* kaṃcid *m;* vaṇijam *m;* vīṇāsedīm. — 52. vaṇijyo B. — 53. -karmmāraḥ B -kartāraḥ *m;* çaktā; avādayat B. — 54. sāta- B.

45. Lokottamasya : cf. lokottara. — 54. Samangalam : corriger en sumangalam?

तत्र यानादवप्लुत्य प्राविशं गृहमृद्धिमत् ।
उत्थास्नुरिव मेधावी विशालं हृदयं श्रियः ॥ ५५ ॥
दृत्तकस्तु पुरो ऽस्माकं द्वारीदासमभाषत ।
अद्यारभ्यास्य युष्माभिराज्ञा संपाद्यतामिति ॥ ५६ ॥
अथ व्यज्ञापयन्प्रह्वाः सूपकाराः समेत्य माम् ।
आज्ञापयत युष्माकं कः पाकः साध्यतामिति ॥ ५७ ॥
मम त्वासीन्मया तावद् ब्राह्मणत्वं प्रकाशितम् ।
ब्राह्मणाश्च घृतक्षीरगुडादिमधुरप्रियाः ॥ ५८ ॥
तदिदं युक्तमित्येतच्चिन्तयित्वेदमुक्तवान् ।
ननु हस्तपुटग्राह्यं पायसं साध्यतामिति ॥ ५९ ॥
अथ हस्तं विधूयोक्तं सूपकारेण गच्छता ।
अन्नसंस्कारशास्त्रज्ञाः कां दिशं यान्तु संप्रति ॥ ६० ॥
भीमसेनादिभिर्यानि सूदशास्त्राणि चक्रिरे ।
कर्मकर्यो ऽपि तान्यस्मिन्गृहे प्रायेण जानते ॥ ६१ ॥
यक्षीकामुकमासाद्य प्रभुं भोजनकोविदम् ।
अनर्घकाणि जातानि चरितार्थानि पायसे ॥ ६२ ॥
अहो नागरकः स्वामी स्वयं प्रवहणेन यः ।
आलेख्ययक्षमादाय यक्षीकामुकमागतः ॥ ६३ ॥
सर्वथा धिगकार्यज्ञमैश्वर्यजनितं मदम् ।
गमितः प्रेष्यतां येन मादृशो ऽपीदृशामिति ॥ ६४ ॥
अथ मर्दनशास्त्रज्ञस्तरुणः परिचारकः ।
ममाङ्गं गन्धतैलेन मृद्नाति स्म यथासुखम् ॥ ६५ ॥
पश्चादुद्वर्तनं स्नानमहताम्बरधारणम् ।
कृत्वा देवप्रणामं च प्रायं भोजनमण्डपम् ॥ ६६ ॥

55. yānād *ex* yā.ād (*grattage*) B; avaplutya *m;* prāvimsaṃ B; utthāṣṇar B utthāṣṇur *m.* — 56. abhāṣat B abhāṣataḥ *m;* yusmābhir B. — 57. vyajñāpayat B; yuṣmākapākaḥ *m.* — 58. prakāṣitaṃ B; brāhmaṇāṃ *m;* -priyaḥ B. — 59. etatrimtayitve- *m;* pāyasa B. — 61. sūpa- *m;* prāyena B. — 62. anarṣakāni *m;* jānitāni B¹. — 63. pravahanena B; 63 cd *om. m;* ālekhyakṣayakṣam B¹. — 64. 64 ab *om. m;* prasyatāṃ *m;* mādṛçāpī-. — 65. mṛhnāti *m.*

55. Utthāsnur: le simple sthāsnu existe; utthāsnu doit signifier «énergique».

61. Bhīmasena : l'un des Pāndavas; il est expert en cuisine et il se fait le cuisinier de Virāta sous le nom de Ballava (cf. ballava, devenu un nom générique du cuisinier, *infra* 73 et aussi ballavaka, X, 65).

तत्र भोजनभूमिष्ठं मां पनस्कन्द दत्तकः ।
स्वभ्रातृभागिनेयादिपङ्क्तिमध्य उपाविशत् ॥ ६७ ॥
कुलालचक्रपात्री च पात्री मम हिरण्मयी ।
पायसेनेन्दुवर्णेन सूपकारेण पूरिता ॥ ६८ ॥
पार्श्वे पायसपात्र्याश्च तेजस्विमणिभाजने ।
महासारमुसारत्ने स्थापिते मधुसर्पिषी ॥ ६९ ॥
चिन्तितं च मया जातो महानयमुपद्रवः ।
मधुमांसोचितः क्वाहं क्व चेदं घृतपायसम् ॥ ७० ॥
केन नाम प्रकारेण त्यजेयमिदमित्यहम् ।
विचार्य पायसग्रासं दग्धो ऽस्मीति निरस्तवान् ॥ ७१ ॥
तेषां संप्रत्ययार्थं च हरन्दाहरुजं किल ।
शीतपानीयगण्डूषैर्मुखं मुहुरशीतयम् ॥ ७२ ॥
बल्लवस्तु पुरः स्थित्वा वीक्ष्य दत्तकमुक्तवान् ।
नायं विप्रः कथं विप्रः प्रद्विष्याद् घृतपायसम् ॥ ७३ ॥
आचष्ट मर्दकस्वेदगासवामोदवासितः ।
निश्वासो ऽस्य मया घ्रातः शनकैर्निश्चरन्निति ॥ ७४ ॥
दत्तको ऽपि कराग्रेण पिधाय मुखमात्मनः ।
कम्पयित्वोत्तमाङ्गं च तं ब्रुवन्तं न्यवारयत् ॥ ७५ ॥
अब्रवीच्च पयःपानं यूयं पिबत पानकम् ।
पानकस्यापि पानेन गोष्ठी संभाव्यतामिति ॥ ७६ ॥
मया तु जाततर्षेण पाने परिणतिं गते ।
तत्पीतं पानसादृश्यात्पानबुद्ध्यैव पानकम् ॥ ७७ ॥

67. bhūyiṣṭaṃ *m;* -bhagineyā- B; upāvisat B. — 68. pātrī[3] *om. m;* hiṇmayī B[1]. — 69. -pātryacca B -pātryaṃca *m;* -susāra- *m.* — 70. aucitaḥ. — 72. sīta- B; gaḍūṣair *m;* asītayaṃ B. — 74. nisvāso; sanakair B; niççaraṃnviti *m.* — 75. uttamāgañ B. — 76. pātakaṃ *m;* pātena *m.* — 77. prītaṃ *m;* -sādṛsyāt B; pānabudhyaiva B pātabudhyaiva *m.*

69. Le musāra (autre forme : masāra) paraît être l'améthyste (Finot, *Lapidaires indiens*, XVIII).

73. Ballavas : cf. 61.

76-77 Payaḥpānam : adjectif.

Pānena (76) : «action de boire». Mais le même mot, au vers 77, désigne une boisson alcoolique, mettons du «vin». Par le mot pānaka, «petit vin», Dattaka prétend désigner une boisson, qui n'est pas de l'eau pure, mais qui s'en rapproche. En fait, il n'y a sur la table que du vin (pāna). que Dattaka baptise pānaka (piquette), pour que son hôte, qui d'ailleurs ne s'y trompe pas, puisse en boire sans vergogne.

खण्डमांसप्रकाराद्यं नानाधिष्ठानसंकुलम् ।
सेवित्वाहारमग्राम्यमुदतिष्ठं सदत्तकः ॥ ७८ ॥
संमृष्टभोजनस्थाने पुष्पच्छुरितकुट्टिमे ।
कान्तमध्यासि पर्यङ्कं न्यस्तं तत्रैव मण्डपे ॥ ७९ ॥
कर्पूरत्रिफलानाभिलवङ्गैलासुगन्धिना ।
मुखस्य गन्धरागौ च ताम्बुलेनोदपादयम् ॥ ८० ॥
एवं च सुखमासीनो वीणादत्तकमब्रवम् ।
वीणोन्मत्तिरियं कस्माच्चम्पायां कथ्यतामिति ॥ ८१ ॥
तेनोक्तमिह चम्पायां सानुदासो वणिक्पतिः ।
तस्य गन्धर्वदत्तेति सुता त्रैलोक्यसुन्दरी ॥ ८२ ॥
स च तां ध्रियमाणो ऽपि वरैर्वरगुणाकरैः ।
अभिप्रायेण केनापि न कस्मैचित्प्रयच्छति ॥ ८३ ॥
प्रत्याख्यातुमशक्तेन याचितेन क्षणे क्षणे ।
तेन शुल्कमुपन्यस्तं दुःसंपादं सुरैरपि ॥ ८४ ॥
अपूर्वं किल गायन्त्यास्तस्याः किमपि गीतकम् ।
यो ऽनुवादयिता वीणां परिणेता स तामिति ॥ ८५ ॥
मयेयं परिणेतव्या मयेयमिति निस्त्रपः ।
न कश्चिद्यो न चम्पायां वीणयोन्मत्तकः किल ॥ ८६
पुरो नागरकाणां च चतुःषष्टेस्तदर्थिनाम् ।
षष्ठे षष्ठे गते मासे सा तद्गायति गीतकम् ॥ ८७ ॥
अनेन च प्रकारेण यातः कालो महानयम् ।
न चापि वीणया कश्चिदनुगच्छति तामिति ॥ ८८ ॥
एतत्कथावसाने च पुरुषौ श्रोत्रियाकृतौ ।
वीणादत्तकमब्रूतां स्थविरौ वेत्रधारिणौ ॥ ८९ ॥

79. puṣpaccurita- B. — 80. -odayādayaṃ B. — 81. āsīne; abruvaṃ *m;* -onmantir B. — 82. vaṇik- B; tayā *m.* — 83. vrūrairvaṇukākaraiḥ *m.* — 84. açakyena *m;* sulkam B çuklam *m.* — 85. āpūrvaṃ *m;* -vādayatā; pariṇītā *m.* — 86. nistrayaḥ B; kilaḥ B. — 87. catuḥṣaṣṭhes B. — 89. srotriyā- B: vedhāriṇau *m.*

78. Adhiṣṭhāna : sens nouveau : «condiment, sauce», comme niṣṭhāna.
83. Dhriyamāṇo : on pourrait aussi bien préférer prīyamāṇo, qui serait à peine une correction, ou encore songer à vriyamāṇo.

श्रेष्ठिना प्रेषितावावां संदेशेन त्वदन्तिकम् ।
यदि सज्जा सुहृद्गोष्ठी समस्ता क्रियतामिति ॥ ९० ॥
तेनोक्तं सुहृदः सज्जा यदि वः सुस्थिता गृहाः ।
कल्या गन्धर्वदत्ता वा स्व एव क्रियतामिति ॥ ९१ ॥
ततस्तं पृष्टवानस्मि महोत्साहेन चेतसा ।
रूपं गन्धर्वदत्तायाः कीदृगित्यथ सो ऽब्रवीत् ॥ ९२ ॥
तस्याः स्वकान्तिपरिवेषपटापिधानं
मेघप्रभाप्रकरसारितहर्म्यगर्भम् ।
उत्कृष्टविस्मयविमोहितमानसेन
रूपं निरूपयितुमेव मया न शक्यम् ॥ ९३ ॥

इति बृहत्कथायां गन्धर्वदत्तालाभे चम्पाप्रवेशो नाम षोडशः सर्गः ॥ १६ ॥

90. sreṣṭinā B; sandesena B; -antikaṃ *ex* -antikiṃ B; çajjāsuhṛjjyeṣṭhī *m.* — 91. kalpā; sva eva B çceyeva *m.* — 92. sābravīt *m.* — 93. -pariveça-.

itibṛhatkathāyāṃ *om.* B; nāmaḥṣaṣṭhadaçasarggaḥ B.

93. Mètre : vasantatilakā.

## XVII

अथ गन्धर्वदत्तायास्तां गुणाकारसंपदम् ।
समाकर्ण्यैव कर्णाभ्यां मनो नीतं विधेयताम् ॥ १ ॥
पृच्छामि स च भूयस्तामपि शक्या भवेन्मया ।
द्रष्टुं गन्धर्वदत्तेति तेन प्रोक्तं न शक्यते ॥ २ ॥
अगान्धर्वेण सा द्रष्टुं देवेनापि न शक्यते ।
यदि चेच्छथ तां द्रष्टुं गान्धर्वं शिक्ष्यतामिति ॥ ३ ॥
मयोक्तं नारदीये ऽपि निर्वृत्ते किन लभ्यते ।
गान्धर्वग्रन्थसत्तमादस्माकं कार्यतामिति ॥ ४ ॥
ततो व्याहारितस्तेन वीणाचार्यः स्वरस्वरः ।
नष्टश्रुतिस्वरज्ञानो भूतिको नाम दुर्भगः ॥ ५ ॥
आसीच्च मम तं दृष्ट्वा विज्ञातं नरवानरम् ।
अलं मे नारदीयेन ज्ञातं गन्धर्वदत्तया ॥ ६ ॥
ईदृशः शिष्यतां गत्वा राज्यलाभो ऽपि गर्हितः ।
अन्यायागतमैश्वर्यं निन्दन्त्येव हि साधवः ॥ ७ ॥
अभ्युत्थानाभिवादाभ्यां तं वीणादत्तकादयः ।
अपूजयन्मया चासौ न द्रष्टुमपि पारितः ॥ ८ ॥

3 *om. m;* sakyate B; gandharva- B. — 4. 4ab *om. m;* nirvṛte B. — 5. naṣṭa-svaraçrutijñāno *m.* — 6. āsīccagagamnamdṛṣṭvā *m.* — 7. kīdṛçaḥ *m;* anyāyamitam *m;* eçvaryan B[1]; nimdaṃteva *m.* — 8. āyutthānā- *m;* dhāritaḥ *m.*

4. Nirvṛtte : correction nécessaire, nirvṛte ne donnant pas de sens acceptable. Nirvṛtta = avṛtta «non étudié d'un bout à l'autre»; vṛtta peut avoir le même sens que vartita selon *Pāṇini*, VII, 2, 26.

Nāradīye : nāradīya = nāradīyaçikṣā : le traité de musique ou plutôt la méthode de luth mentionnée ici et mise sous le nom du ṛṣi Nārada (cf. 117) ne peut être déterminée avec précision : il y en a eu plus d'une; en effet *Çārṅgadeva* (*Saṃgītaratnākara*) cite une *Nāradīçikṣā* différente de celle qui a été conservée. Bharata mentionne Nārada comme un de ses prédécesseurs.

5. Naṣṭaçrutisvarajñāno : si l'on coupait naṣṭaçruti-svarajñāno, le premier terme signifierait «sourd» mais il faudrait néanmoins entendre naṣṭa- devant le second; il vaut mieux couper naṣṭa-çrutisvarajñāno; çruti : 22e partie de l'octave; svara : note.

अथ दृष्टकटाक्षेण चोदितायः स वीक्ष्य माम् ।
वीणादत्तकदत्तायां पीठिकायामुपाविशत् ॥ ९ ॥
अब्रवीद्दत्तकस्तं च यशोभर्तुर्द्विजन्मनः ।
भवानस्योपपन्नस्य नारदीयं करोत्विति ॥ १० ॥
तेनोक्तं साभिमानत्वादयं मामवमन्यते ।
न च पारयते दातुं दारिद्र्यात्काकणीमपि ॥ ११ ॥
गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।
न चास्तिन्नेवमस्यास्ति यद्यस्ति प्रतिपद्यताम् ॥ १२ ॥
दत्तकेनोक्तमाचार्यं विरूपं मन्त्रितं त्वया ।
को यशोकामुकं शक्तो दरिद्रमिति भाषितुम् ॥ १३ ॥
यस्य दासः सदासो ऽहं त्वं जानास्येव मादृशः ।
स यशोकामुकः कस्माद्दरिद्र इति भण्यते ॥ १४ ॥
सुवर्णानां शतं चापि गृह्यतां त्वादृशोचितम् ।
पतिते द्रोणमेघे ऽपि न तिष्ठति वसु त्वयि ॥ १५ ॥
नारदादिपरीवारां स चाभ्यर्च्य सरस्वतीम् ।
दुर्व्यवस्थिततन्त्रीकां वीणां मह्यमुपानयत् ॥ १६ ॥
मया तु सा विपर्यङ्कस्था स्थापिताङ्के यदा तदा ।
भूतिको मां धिगित्युक्त्वा वीणादत्तकमुक्तवान् ॥ १७ ॥
न यशोकामुको मन्दः शक्यः शिक्षयितुं मया ।
वीणाग्रहणमप्येष न जानाति सुखैधितः ॥ १८ ॥
न नाम स्वयमेतेन यदि वीणा न वादिता ।
आलेख्यवादकाः के ऽपि न दृष्टा नष्टदृष्टिना ॥ १९ ॥

9. upāvisat B. — 10. karottviti B. — 11. dāridyāt *m;* kākaṇīm *ex* kāraṇīm B. — 12. puṣkarena *m;* -āsminnevam *m;* yadyasmi *m.* — 13. ācārye *m;* -kāmuka *m.* — 14. yasyāḥ *m.* — 17. viparyasthā B viparyaṅkā *m.* — 18. çikṣiyitum; eça B; sukhedhitaḥ B sukherpitaḥ *m.* — 19. -vādakāṃkepi B; dṛṣṭāḥ *m.*

11. Kākaṇī (= kākiṇī) est donné par *Galanos.*

12ab. Phrase nominale remarquable. L'instrumental est un instrumental de prix.

14ab. Il n'est pas absolument impossible d'entendre d'une part yasya dāsaḥ... 'ham et d'autre part (yasya) jānāsy eva mādṛçaḥ; mais il vaut bien mieux faire de tvam... mādṛçaḥ une parenthèse («tu sais bien ce qu'est un homme de ma sorte»). Le mieux est de voir dans mādṛçaḥ un génitif; l'emploi avec jñā- n'en a rien d'insolite mais c'est un trait d'archaïsme.

17. Viparyak- : «à l'envers» (le manche dirigé vers le bas ou peut-être le manche dans la main droite).

इति संतक्ष्य मां वाग्भिरातोद्यं परिवर्त्य च ।
सनिषादो निषादं मे षड्ज इत्युपदिष्टवान् ॥ २० ॥
अथामर्षपरीतेन दृढं ताडयता मया ।
चतस्रः पञ्च वा तन्त्र्यश्छिन्नाश्चटिति विस्वराः ॥ २१ ॥
अथोक्तो दत्तकस्तेन तन्त्रीवर्तकसंग्रहम् ।
अकृत्वा किं करोत्यस्य नारदीयं भवानिति ॥ २२ ॥
अहं तु विस्मृतच्छद्मा छिन्नतन्त्रीमपि क्षणम् ।
श्रुतिवासितकर्णत्वान्मृदु वीणामवादयम् ॥ २३ ॥
अथ विस्फारितैर्नेत्रैरुत्कर्णा दत्तकादयः ।
किमेतदिति जल्पन्तो मामैक्षन्त सविस्मयाः ॥ २४ ॥
मूतिकस्तु भयक्रोधलज्जाविस्मयनिष्प्रभः ।
काकतालीयमित्युक्त्वा गत एव सदक्षिणः ॥ २५ ॥
एवं च दिवसं नीत्वा कृतप्रादोषिकाशनः ।
आवसं शयनावासं मालाधूपाधिवासितम् ॥ २६ ॥
हंसपक्षांशुकप्रायकोमलास्तरणास्तृतम् ।
भास्वद्वज्रशिलापादमासेवे शयनं ततः ॥ २७ ॥
रूपाकृष्टजगन्नेत्रे युवती सारभूषणे ।
रूपाजीवे शनैः पादौ समवाहयतां मम ॥ २८ ॥
सहजाहार्यमाधुर्यरमणीयतराक्षरैः ।
वचोभिः किल ते चित्तं मदीयं हर्तुमैच्छताम् ॥ २९ ॥

20. saṃtarjya *m;* nisādaṃ B; khaḍga *m;* -dṛstavān. — 21. -āmayaparītema *m;* dṛḍhāṃ *m.* — 23. karṇātvān *m.* — 24. visphāritainetraiḥ B. — 26. prādosikāsanaḥ B prodosikā- *m;* sayanā- B. — 27. -āṃsuka- B; açevaṃ *m;* sayanan B. — 28. rupājīvesanaiḥ B rūpājīvaçataiḥ *m;* pādo B.

20. Saṃtakṣya : le mot usuel serait saṃtarjya (que donne *m*) mais il faut préférer saṃtakṣya à cause de *Pāṇini*, III, 1, 76.

Saniṣādo : «en faisant un niṣāda». On pourrait entendre aussi sa niṣādo «ce sauvage». En tout cas il donne à la note niṣāda le nom de ṣadja; dans la théorie classique ce sont respectivement la dernière et la première note de la gamme.

22. Vartaka : «laiton» (*Hem., Abhidh.*, 1050).

23. -vāsita- : de vāsay-.

28. Jagannetra = la lune.

Vajraçilā : ce terme (comme vajrapāṣāṇā) paraît désigner l'albâtre ou le marbre blanc (cf. 79 et 101).

29. Sahajāhārya- : «(douceur) tant naturelle qu'ajoutée». Cf. XIX, 115 et nijāhārya- I, 60. Pour āhārya = latin aduenticius, cf. en outre *Tantrākhyāyika* (Hertel), p. 58, 7; 64, 11; 126, 18; *Jātakamālā* (Kern), p. 122, 11; *Divyāvadāna* (Cowell and Neil), p. 384, 21 et *Sūtrālaṃkāra*( trad. Huber), p. 96, où la peau, la chair etc. des hommes sont opposées

वेगवत्या वियुक्तं च प्रतिभान्ति स्म तानि माम् ।
रासभीरसितानीव विरसानि स्वकर्णयोः ॥ ३० ॥
तानि चाश्रोतुकामेन निद्राव्याजः कृतो मया ।
अथ प्रसुप्त एवास्मि निरासे ते च जग्मतुः ॥ ३१ ॥
अर्धे याते च यामिन्याः श्वासानुमितचेतने ।
दृष्टतत्त्व इवाविद्यां निद्रामत्यजमुत्कटाम् ॥ ३२ ॥
चित्रपट्टपिधानायां तिष्ठन्त्यां नागदन्तके ।
वीणादत्तकवीणायां ततो दृष्टिं न्यपातयम् ॥ ३३ ॥
मम त्वासीदवश्यं मां नेता श्वस्तत्र दत्तकः ।
वीणा च वादनीया स्याच्चिरोत्सृष्टा च सा मया ॥ ३४ ॥
विद्या चाराध्यमानापि दुःखेन परिचीयते ।
भक्त्या मातुः सपत्नीव निसर्गकुटिला हि सा ॥ ३५ ॥
वीणा संनिहिता चेयं वेला चेयं निराकुला ।
जिज्ञासे तावदित्येनां विचार्याहं गृहीतवान् ॥ ३६ ॥
उत्कर्षन्नपकर्षंश्च काश्चित्काश्चिन्मनाङ्मनाक् ।
व्यवस्थापयितुं तन्त्रीः करशाखाभिरस्पृशम् ॥ ३७ ॥
अथाशृणवमालापान् स्वस्माद्वासगृहाद्बहिः ।
समुद्रसेन गोदत्त धाव धाव सखे द्रुतम् ॥ ३८ ॥
वीणादत्तकभद्रस्य गृहेषु हतकर्मणः ।
सरस्वती भगवती वीणां सारयति स्वयम् ॥ ३९ ॥
वीणायाः सार्यमाणायाः स्वनश्चोदय ईदृशः ।
समाप्तसारणायास्तु कीदृङ्नाम भविष्यति ॥ ४० ॥

30. viyuktāçca *m;* rāsabhārasitānī *m;* virasāti *m.* — 31. -āsrotu- B; -vyājyaḥ B; -āsminni- *m;* nirāse B. — 32. yāme *m;* svāsā- B; -tatva. — 33. nāgadattake *m;* drṣti B; nipātayam. — 34. āsīda- B *ex* āsīva-; avasyaṃ B; svas; vādanīya B: cirātsrṣṭā *m.* — 37. apakarṣaṃca B ayakarṣaṃca *m;* -sākhābhir B; asprṣam B *ex* asprṣṭam. — 38. ālāpāṃstadvāsa- B ālāpāsvasmādvāsa- *m.* — 39. gṛhesu B gṛhasu *m.* — 40. sāryamānāyāḥ; kīdṛgnāma B kīdṛṅgāma *m.*

aux vêtements, ornements etc., lesquels sont les āhāryāṇi (ces rapprochements sont dus à J. S. Speijer).

30. Pratibhānti : avec un acc. d'une part (mām) et un gén. de l'autre (-karṇayoḥ), les deux également corrects. Svakarṇayoḥ : lire çvakarṇayoḥ ??

33. Nyapātayam : je n'admets pas l'imparfait sans augment et j'ai eu tort de l'admettre IV, 21 et V, 109.

35. Il n'est pas aisé à l'enfant d'une épouse de se concilier les bonnes grâces d'une autre femme de son père (sapatnī).

38. Les personnages qui s'interpellent sont des marchands; leurs noms suffisent pour l'indiquer (samudra-; -datta). Cf. 43.

तस्मात्सरस्वतीवीणे श्रुत्वा श्रुत्वा च संस्तुते ।
नेत्रश्रोत्राणि वो यान्ति पवित्रकरतामिति ॥ ४१ ॥
अथावलम्ब्य तां वीणां त्वरया नागदन्तके ।
प्रावृत्य सशिरःपादं कायं निद्रां निवागमम् ॥ ४२ ॥
नागरास्तु व्यवर्तन्त जल्पन्तो दीनचेतसः ।
कथं सरस्वती क्षुद्रैर्दृश्यते ऽस्मद्विधैरिति ॥ ४३ ॥
यापितायां तु यामिन्यां कृतपूर्वाह्णिकक्रमम् ।
मामनुल्बणवेषं च वन्दित्वा दत्तको ऽब्रवीत् ॥ ४४ ॥
अमी नागरकाः प्राप्ताश्चित्रयानप्रसाधनाः ।
तद्गन्धर्वसमस्यायै युष्माभिरपि गम्यताम् ॥ ४५ ॥
आज्ञापयत यानं च करेणुतुरगादिकम् ।
येन वो रोचते गन्तुं तेन प्रस्थीयतामिति ॥ ४६ ॥
मयोक्तं गच्छतु भवान्वाहनेन यथासुखम् ।
अहं तु पादचारेण गच्छामि शनकैरिति ॥ ४७ ॥
अथास्मदनुरोधेन मां पुरोधाय दत्तकः ।
प्रस्थितः पादचारेण सनागरकमण्डलः ॥ ४८ ॥
अमन्त्रयन्त यान्तश्च क्रुद्धा नागरका मिथः ।
यचीकासुकल्पो ऽयमनर्थो ऽस्मानुपागतः ॥ ४९ ॥
वयमस्य प्रसादेन त्यक्तमण्डितवाहनाः ।
आशादीर्घासु रथ्यासु चरणैः संचरामहे ॥ ५० ॥
मेरोर्द्रोणीरिवाक्रामन्विशिखा विस्तृतायताः ।
अपश्यं वेश्मनां मालास्त्वेव शिरसामिव ॥ ५१ ॥
प्रासादेषु च वल्गन्तीर्गवाक्षप्रेरितेक्षणाः ।
कोकिलासुभगालापाः शृणोमि स्म कुलाङ्गनाः ॥ ५२ ॥

41. -çrotāni; pravitrataratām B. — 42. sasiraḥ- B maçiraḥ- *m*; kāya *m*. — 44. -pūrvāhnika-; anulbanavesañ B anulbaṇaveçaṃ *m*. — 45. nāgarakāṃ B; gaṃdhavegamasyāye *m*; yusmābhir B. — 46. -ādikaṃ *ex* -ādhikaṃ B -ādhikaṃ *m*; vā *m*. — 47. sanakairili B çanakairi athāsmad- *etc. m*. — 48. anurodhena *ex* -rodhina B anurokṣena *m*. — 49. amantayatu B; yābhuçca B[1] yāntaçca B[2] yātu *m*. — 50. āsā- B. — 51. drāṇīr B; visikā; apasyaṃ B apaçya *m*; vesmanāṃ B -nā *m*. — 52. kokilāçu- *m*.

**41. Pavitrakaratām** : je préfère le texte de **m** (sens : le fait d'être agent de purification) : en effet leurs yeux et leurs oreilles deviendront capables de les purifier. Mais le texte de B (sens : [deviendront] plus purs) est explicable aussi.

अयि मागधि वैदेहि मलयावति यावनि ।
यवीकामुकमायातुं सख्यः पश्यत धावत ॥ ५३ ॥
खलया किल यक्षायमीर्ष्यामुषितचेतसा ।
आकाशात्पातितः प्राप्तो दत्तकेन सुवल्गना ॥ ५४ ॥
ध्रुवं सा राक्षसी यक्षी यदि वा मृत्तिकामयी ।
कुब्जया मुग्धया वापि यया स्वार्थो न चेतितः ॥ ५५ ॥
अथ वा सर्वमेवेदमलीकं प्रतिभाति माम् ।
क्व यवीकामुकः क्वायं वामः कामी रतेरिव ॥ ५६ ॥
इति निर्दिश्यमानो ऽहमङ्गुलीभिरितस्ततः ।
नयनोत्पलमालाभिरर्च्यमानश्च यातवान् ॥ ५७ ॥
अथ नागरकाः प्रापन् सुधां गृहपतेर्गृहम् ।
अङ्गं गन्धर्वदत्तायास्तेषामिव मनोरथाः ॥ ५८ ॥
मणिहाटकवज्राद्यैरङ्गैस्तैरेव कल्पितम् ।
स्फुरद्दिव्यप्रभावात्तु न विद्मः किंमयैरिति ॥ ५९ ॥
ततः प्रथमकक्षायामपश्यं संनिधापिताम् ।
आसनानां चतुःषष्टिं महापट्टोर्णवेष्टितम् ॥ ६० ॥
तेषु नागरकः कश्चित्कांचिद्दाह स सस्मितम् ।
अहो महाखलीकारो यवीकामुकमागतः ॥ ६१ ॥
सानुदासाभ्यनुज्ञाताः सुहृदो दत्तकादयः ।
समायातास्चतुःषष्टिस्तावन्त्येवासनान्यपि ॥ ६२ ॥
यवीकामुकमालोच्य पञ्चषष्टमनासनम् ।
यत्सत्यं लज्जितो ऽस्मीति ततश्चोक्तमृजुर्भवान् ॥ ६३ ॥

53. dhāvataḥ. — 54. çilayā *m;* yakṣoyam *m;* īṣyā *B.* — 55. -mayīḥ B; yathā *m.* — 56. rater *ex* raker B raver *m.* — 58. athavānāgarakāḥ B[1]; prāpat; sudhā *m.* — 59. sphuradivya- *m;* -prabhāvātu B. — 60. catuḥṣaṣṭīṃ *m;* mahāpadorṇa- *m.* — 61. kāñcid B kāṃcid *m.* — 63. pañcaṣaṣṭim; yatsatya; tenacoktam B.

53. Les femmes d'un même gynécée se désignent familièrement entre elles par le nom de leur nationalité d'origine.

54-56. Chacun de ces trois vers est dans une bouche différente.

58. Ils prennent possession en fait de la maison de Sānudāsa et en imagination de la personne de Gandharvadattā — l'une et l'autre sont pour eux le nectar des dieux (?). Je ne me flatte pas de bien comprendre. Il doit y avoir un jeu de mots (sudhā «nectar» et «stuc»).

59. Le sujet est à la fois gṛham et aṅgam.

60. Mahāpaṭṭorṇa- : *Galanos* donne mahāpaṭa avec le sens de «peau». Il s'agit de peaux de moutons avec leur laine.

63. Tataç : je préfère tataç à tena

आयत्तो दत्तको यस्य सपुत्रपशुबान्धवः ।
तेन गन्धर्वदत्तापि सुलभा किमुतासनम् ॥ ६४ ॥
पश्चषष्टमबुद्धा तु निक्षिप्तं तत्र दत्तकः ।
दत्तवान् स्वयमाकृष्य मह्यमात्मीयमासनम् ॥ ६५ ॥
ते ऽपि नागरकाः शेषाः स्थिते तिष्ठति दत्तके ।
तिष्ठन्ति स्म स्थिता एव भृतका इव भर्तरि ॥ ६६ ॥
अथान्यदासनं दत्तं दत्तकायोज्ज्वलप्रभम् ।
स तदध्यास्त शेषाश्च यथासनमुपाविशन् ॥ ६७ ॥
ततस्त्रिंशच्छतं तस्माद्गणिकानां विनिर्गतम् ।
गृहादसुरकन्यानां महासुरपुरादिव ॥ ६८ ॥
आत्तभृङ्गारभृङ्गारा काचिदावर्जयज्जलम् ।
तासां प्रत्येकमेकैका तेषां पादानधावत ॥ ६९ ॥
मदीयस्तु यया पादः पाणिभ्यामवलम्बितः ।
तया स्वेदजलेनैव धौतः श्लथशरीरया ॥ ७० ॥
आवर्जितवती या च जलं लुलितलोचना ।
विस्रस्तहस्तया हस्ताद् भृङ्गारः पातितस्तया ॥ ७१ ॥
प्रविशन्धौतपादश्च शृणोमि स्म प्रजल्पिताः ।
प्रांशुप्राकारगर्भस्थाः श्रुतिहारिगिरः स्त्रियः ॥ ७२ ॥
अनर्घो ऽयमुपन्यस्तः सानुदासेन दारुणः ।
शुल्कं गन्धर्वदत्ताया वीणावादननामकम् ॥ ७३ ॥
यदि रूपसुपन्यस्येच्छुल्कं गृहपतिस्ततः ।
न यक्षीकामुकादन्यं प्राप्नुयाद्भर्तृदारिका ॥ ७४ ॥
वीणायां तु प्रयुक्तायां भग्नो ऽयं नो मनोरथः ।
ह्यो यस्माद्भूतिकेनास्य नारदीयं श्रुतं किल ॥ ७५ ॥

64. āyaṃto *m;* gandharvadattopi. — 65. tratra *m;* ātmāyam *m.* — 67. upāvisat B. — 68. triṃsatsatan B; ivaḥ B[1]. — 69. tāṣāṃ B: adhāvat B adhāvatā *m.* — 70. pāṇibhyāmevalambitaḥ *m;* çvedajanenaiva B; çlathasarīyā B. — 71. yāvajalaṃ B yāvajjalaṃ *m;* lulilocanā *m.* — 72. pravisan B; prāṃsu- B; -sthā B; -gira B. — 73. çuklaṃ *m.* — 74. upanyasyaicchulkaṅ B -syechuklaṃ *m;* -dārakāḥ B -kārakāḥ *m.*

par … que le personnage ne s'est pas adr… é à l'un de ses amis seulement (ou bien il faudrait lire kaṃcid au vers 61).

70-71. Elles ont reconnu les marques du cakravartin aux pieds de Naravāhanadatta.

इदं तावन्महद्दुःखं यद्यवीकामुकोऽनया ।
अयं नासुरभीभूतः शुल्कदोषान्न लभ्यते ॥ ७६ ॥
इदं तु दुःसहतरं यदिमां बकुलावलीम् ।
अनात्मज्ञो बलात्को ऽपि गले तां लम्बयिष्यति ॥ ७७ ॥
वीणावादनशुल्केयं साभियोगाश्च नागराः ।
प्रजापतिश्च दुर्लभः सर्वथा शिवमस्त्विति ॥ ७८ ॥
अथ निष्कम्पकालिन्दीसलिलस्वच्छकुट्टिमाम् ।
ज्वलन्मणिशिलास्तम्भां विशालां प्राविशं सभाम् ॥ ७९ ॥
सभा नागरकैः साभाच्छिन्नप्रभविभूषणैः ।
उपत्यकास्थली मेरोः फुल्लैः कल्पद्रुमैरिव ॥ ८० ॥
अथ हंस इवोत्सार्य नलिनीदलमण्डलम् ।
निर्गतः कञ्चुकी प्रेर्य तिरस्करिणिकाम्बरम् ॥ ८१ ॥
स नागरकसंघातमवोचद्विनयागतः ।
विज्ञापयति वः श्रेष्ठी स्वागतं गुणरागिणाम् ॥ ८२ ॥
भवद्भिर्वर्णसंपन्नैरन्तःसारैरिदं गृहम् ।
शातकुम्भमयैः पूतं गङ्गाम्भःकलशैरिव ॥ ८३ ॥
यदि सर्वे समायाता यातो वागमनश्रमः ।
ततो गन्धर्वदत्तायै निर्देशो दीयतामिति ॥ ८४ ॥
ते परस्परमालोक्य विद्राणवदनप्रभाः ।
ह्रीताः सदिशमाकाशमपश्यन्मोषितोत्तराः ॥ ८५ ॥

76. nāsurabhī- *m;* çukla- *m.* — 77. iyaṃ *m;* galetāṃgalambayiṣyati *m.* — 79. -stambhā B; prāvisat B prāviçan *m.* — 80. çobhodbhinna- *m.* — 81. karaṇikā- *m.* — 83. bhavadbhi B; sāta- B. — 84. yasi *m*; -samaḥ B[1] -sramaḥ B[2]. — 85. nidrāṇa- *m;* hrītā; apaçyat.

78. «Prajāpati est de mauvais augure». On est dans le jour lunaire marqué par le nakṣatra rohiṇī; ce nakṣatra est celui de Prajāpati; or Prajāpati favorise le mariage (cf. 167): il y a donc à redouter le succès de l'un des bourgeois.

79. Maṇiçilā «cristal»; cf. n aṇimaṇḍapa.

81. Tiraskariṇikā (ou -karaṇikā) = -kariṇī, rideau entre scène et coulisse.

82. Guṇarāgiṇām : jeu de mots sur guṇa.

83. Varṇa = «caste» et «couleur»; antaḥsāra = «plein de vertu» et «plein d'eau»; les épithètes s'appliquent à bhavadbhiḥ d'une part (sens 1), à kalaçaiḥ d'autre part (sens 2).

85. Vidrāṇa: «(des gens) qu'on réveille», des «ahuris». Nidrāṇa, de *m*, serait également acceptable: «des endormis». Enfin on pourrait songer à vidrāṇa de drā- «courir»: «(des gens) qui ont perdu la parole» (cette dernière hypothèse peu probable).



IMPRIMERIE NATIONALE.

आयान्तो दत्तको यत्र सपुत्रपशुबान्धवः ।
तेन गन्धर्वदत्तापि सुतरां विस्मितासनम् ॥ ६४ ॥
पञ्चपट्टमकृत्वा तु निक्षिप्तं तत्र दत्तकः ।
दत्तवान्स्वयमानीय मह्यमात्मीयमासनम् ॥ ६५ ॥
तेऽपि नागरकाः शेषाः स्थिते तिष्ठति दत्तके ।
तिष्ठन्ति स्म स्थिता एव भृतका इव भर्तरि ॥ ६६ ॥
अथान्यदासनं दत्तं दत्तकायोज्ज्वलप्रभम् ।
स तदध्यास्त शेषाश्च यथासनमुपाविशन् ॥ ६७ ॥
ततस्त्रिंशच्छतं तस्माद्गणिकानां विनिर्गतम् ।
गृहादसुरकन्यानां महासुरपुरादिव ॥ ६८ ॥
आत्तभृङ्गारभृङ्गारा काचिदावर्जयज्जलम् ।
तासां प्रत्येकमेकैका तेषां पादानधावत ॥ ६९ ॥
मदीयस्तु यया पादः पाणिभ्यामवलम्बितः ।
तया स्वेदजलेनैव धौतः श्लथशरीरया ॥ ७० ॥
आवर्जितवती या च जलं लुलितलोचना ।
विस्रस्तहस्तया हस्ताद्भृङ्गारः पातितस्तया ॥ ७१ ॥
प्रविशन्धौतपादश्च शृणोमि स्म प्रजल्पिताः ।
प्रांशुप्राकारगर्भस्थाः श्रुतिहारिगिरः स्त्रियः ॥ ७२ ॥
अनर्घोऽयमुपन्यस्तः सानुदासेन दारकः ।
शुल्कं गन्धर्वदत्ताया वीणावादननामकम् ॥ ७३ ॥
यदि रूपमुपन्यस्येच्छुल्कं गृहपतिस्ततः ।
न यक्षीकामुकादन्यं प्राप्नुयाद्भर्तृदारिका ॥ ७४ ॥
वीणायां तु प्रयुक्तायां भग्नोऽयं नो मनोरथः ।
ह्यो यस्माद्भूतिकेनास्य नारदीयं हृतं किल ॥ ७५ ॥

64. āyaṃto *m;* gandharvadattopi. — 65. tratra *m;* ātmāyam *m.* — 67. upāvisat B. — 68. triṃsatsatan B; ivaḥ B'. — 69. tāṣāṃ B: adhāvat B adhāvatā *m.* — 70. pāṇibhyāmevalambitaḥ *m;* çvedajanenaiva B; çlathasarīyā B. — 71. yāvajalaṃ B yāvajjalaṃ *m;* lulilocanā *m.* — 72. pravisan B; prāṃsu- B; -sthā B; -gira B. — 73. çuklaṃ *m.* — 74. upanyasyaicchulkaṅ B -syechuklaṃ *m;* -dārakāḥ B -kārakāḥ *m.*

parce que le personnage ne s'est pas adressé à l'un de ses amis seulement (ou bien il faudrait lire kaṃcid au vers 61).

70-71. Elles ont reconnu les marques du cakravartin aux pieds de Naravāhanadatta.

श्रुत्वेदमितरेणोक्तं मा स्म निन्दत्प्रव्राजिनम् ।
को जानाति मनुष्याणां चरितं गूढचारिणाम् ॥ ९७ ॥
यथैकान्तः प्रकटेन धार्ष्ट्येनाश्रावयन्नपि ।
यथा परिचितस्त्रीवत्तथा मां प्रति शोभते ॥ ९८ ॥
ततो यवनिकां भेद्य कन्या चतुरिकाभिर्वृता ।
देवी गन्धर्वदत्तागादभिभूतसभाप्रभा ॥ ९९ ॥
कथयामि कथं रूपं तस्याः संक्षिप्तमुच्यते ।
प्रव्रज्यामाश्रिता नूनमिदानीमप्सरोगणाः ॥ १०० ॥
कल्पितं च सभामध्ये पद्मरागशिलामयम् ।
चन्द्रलेखेव संध्याभ्रमध्यास्त चतुरन्तकम् ॥ १०१ ॥
तेजसोऽभिभवात्तस्याः संकुचन्ति स्म नागराः ।
बालायाः शशिलेखायाः पुण्डरीकाकरा इव ॥ १०२ ॥
साथ प्रत्यायचःसूक्ष्मां रूपनाटकशालिनीम् ।
परिभूतवती गोष्ठीं सनाथामावतीमिव ॥ १०३ ॥
अथ दक्षिणमुत्क्षिप्य करं चतुरिकोदितम् ।
श्रूयतां श्रेष्ठिनो वाक्यं भो नागरककुञ्जराः ॥ १०४ ॥
आस्ते गन्धर्वदत्तेयमियं वीणा च सारिता ।
यो वो वादयितुं शक्तः स किं तिष्ठति ढौकताम् ॥ १०५ ॥
यथेपैर्न च कर्तव्या परिपाटिरपार्थिका ।
सा हि युष्माकमस्माच्च वृथाखेदप्रयोजना ॥ १०६ ॥

97. nindata B; bhavānisa *m.* — 98. dhāṣṭyenā- B; sāṃprati *m;* sobhate B. — 101. sabhāmapadma- *m.* — 102. çiçileṣoyāḥ *m.* — 103. sāthaḥ B; goṣṭīṃ; -valim *m.* — 104. çreṣṭino. — 105. yovā *m.* — 106. anarthakā B; yusmākam B.

religieux qui a fait des vœux (*Alaṃkāra-vimarçinī* (*Kāvya-mālā,* 35, p. 17 *in fine:* diṇḍika = arāga); *P.W*[2]. force le sens en traduisant « ein *nackt* einhergehender *Lehrer* ». Cf. Finot, *Bull. de l'Éc. fr. d'Extr.-Or.*, III, p. 207, à propos du terme diṇḍikanāma, et note de Barth, *ibidem*). A la nuance péjorative près, le sens est le même que dans notre texte : un « vagabond vêtu de guenilles » se confond avec un « religieux errant ».

101. Caturantakam : « un tabouret carré » (?). Gandharvadattā = le rayon blanc de la lune; le siège de marbre rouge = le nuage au coucher du soleil (parce qu'à cette heure il est teinté de rouge).

Padmarāgaçilā : vraisemblablement « marbre rouge »; cf. 28 et 79.

105. Sāritā: verbal, de sar- (causal) « dont l'accord a été vérifié » (en parlant d'un luth). Cf. sāraṇā et V, 80. — Le luth est accordé d'avance, mais dans le mode gāndhāra — ce que le chambellan se garde de révéler — d'où l'impossibilité, pour un musicien ordinaire, d'appliquer ses connaissances de musique usuelle.

ततः स्वयं भवद्भिश्च यत्किंचिन्मापनायिता ।
युष्मानातानमेतां च स तेषामोचयन्निति ॥ १०७ ॥
अथ नागरकाः सर्वे वीणादत्तकमब्रुवन् ।
त्वं नः पूज्यः प्रवीणश्च तस्मादुत्थीयतामिति ॥ १०८ ॥
स यदा कम्पितशिरा नेच्छति स्म तदापरः ।
संभावितनलेपां गत्वा वीणामवादयत् ॥ १०९ ॥
तस्मिन्दोषैरसंकीर्णान्गुणान्मधुरतोत्तरान् ।
संपादयति शब्दो ऽनुशब्दैः साधु साध्विति ॥ ११० ॥
ततो गन्धर्वदत्तायां प्रगीतायामभूत्तम ।
स्वरे ज्ञातं मयेदानीं तेनैवामी वृषाश्रमाः ॥ १११ ॥
पुरा वामनरूपेण बलिं छलयता किल ।
त्रिपिष्टपं त्रिभिः क्रान्तं विक्रमैश्चक्रपाणिना ॥ ११२ ॥
तं च विश्वावसुर्नाम गन्धर्वगणसेवितः ।
क्रामन्तं गगनं वेगात्त्रिश्चकार प्रदक्षिणम् ॥ ११३ ॥
तेन च स्वयमुत्थाय स्तुवता गरुडध्वजम् ।
नारायणस्तुतिं नाम गीतं गीतकमद्भुतम् ॥ ११४ ॥
नारदेन ततः प्राप्तं नारदाद्वृष्णिसूनुना ।
अर्जुनेन ततस्तस्माद्विराटसुतया किल ॥ ११५ ॥
परीक्षित्प्राप्तवान्मातुस्ततो ऽपि जनमेजयः ।
इति क्रमागतं तातात्तातादागमितं मया ॥ ११६ ॥
गान्धारग्रामसंबद्धं क्व गान्धारः क्व मानुषाः ।
स्वर्गादन्यत्र गान्धार इत्याहुर्नारदादयः ॥ ११७ ॥

107. svayañcabhavadbhiçca B; vā; yusmān B. — 108 *om. m.* — 111. jñāta B; vṛṣāsramāḥ B. — 113. gandhagaṇa- B[1]. — 115. virāda-; -sutayātataḥ *m.* — 116. parikṣīprā- *m;* prāptuyāt B; māturtatopi B sātutenāpi *m;* tātaṃtātād *m.* — 117. mānuṣaḥ *m;* gāndhāraḥ *m;* āhunnā- B.

113-114. Ces circonstances ne sont pas mentionnées par *K.S.S.* et *B.K.M.*, mais il s'agit bien du même chant (vaiṣṇava-stuti *K.S.S.*, CVI, 12; *B.K.M.*, 13, 76; keçavastuti *K.S.S.*, CVI, 18; viṣṇugīti *B.K.M.* 13, 71). Selon le *K.S.S.*, Naravāhanadatta le tient directement des Gandharvas : toute la version de l'histoire est absurde dans la *B.K.* cachemirienne qui place la scène dans la ville des Gandharvas; comment ceux-ci peuvent-ils ignorer ce chant qu'ils ont eux-mêmes révélé au héros?

115. La fille de Virāṭa, Uttarā, est la femme d'Abhimanyu et la mère de Parīkṣit (*Mahābh.*, IV, LXXI).

117. Deux grāmas (gammes) sont usuels, le ṣadja-gr. et le madhyama-gr.

तेन यो ऽर्थं न जानाति न चेदभ्युपगच्छति ।
तदसंपादयन्नेव जायते ह्रीयवानसौ ॥ ११८ ॥
अहं पुनरिदं जानन् वयः परिणमत्फलम् ।
पुरो नागरकाणां च यथासामर्थ्यमुत्सहे ॥ ११९ ॥
मयि संलक्षयत्येवमसौ नागरकर्षभः ।
स्मयमानो विलक्षत्वात्स्वमेवाभजतासनम् ॥ १२० ॥
ततः प्रतिहते तस्मिन् सुहृन्मण्डलमण्डने ।
रङ्गो भङ्गमगृह्णात्स निगृहीतज्येष्ठमल्लवत् ॥ १२१ ॥
अथ मां जयिनोत्साहमुत्तिष्ठासन्तमासनात् ।
दृष्ट्वा संभावितात्मानं लज्जयायाहि दत्तकः ॥ १२२ ॥
अन्येन च निमित्तेन वञ्चितो ऽहं निजासनात् ।
तेनोक्तं संकटात्स्थानादन्यत्र स्थीयतामिति ॥ १२३ ॥
ततस्तमुक्तवानस्मि किमिदं न त्वया श्रुतम् ।
यथा सकृत्प्रवृत्तायाः किं करोत्यवगुण्ठनम् ॥ १२४ ॥
प्रविष्टो ऽहं सुहृद्गोष्ठीं यथैव बटुचापलात् ।
तथा गन्धर्वदत्तापि धृष्टमाश्रापिता मया ॥ १२५ ॥
तदस्या बटुचित्तायाः प्रान्तमप्राप्य मा गृहः ।
हा कष्टं वञ्चितो ऽस्मीति पश्चात्तापेन खेद्यते ॥ १२६ ॥
यत्र चामी न लज्जन्ते सलज्जाः सुहृदस्तव ।
तत्र निर्लज्जताश्लाघी लज्जयैव हि लज्जते ॥ १२७ ॥

119. nāgarakānāñ B. — 120. vilakṣatvāt *m;* svayamevābhajatā- B svayamevabhajatā- *m.* — 121. raṅgā *m;* agṛhnāt; nihatajyeṣṭa- B nigṛhyajyeṣṭa- *m.* — 123. saṃkaṭasthānād *m.* — 124. yathā. — 126. prātam *m.*

Quant au gāndbāra-gr., plus moderne (emprunté à la Perse?) mais déjà mentionné par le Pañcatantra, Bharata ne le connaît pas; les théoriciens postérieurs en attribuent la description à Nārada : cf. *Çārṅgadeva, Saṃgītaratnākara* (Ānandāçrama Series), p. 46, 5 : il ne serait en usage que dans le paradis d'Indra, ce qui signifie apparemment qu'il ne servait plus. Sur la constitution des gammes cf. notamment Grosset, article *Inde (les gammes)* dans l'*Encyclopédie de la musique* de Lavignac, I, p. 292 et suiv. et P. R. Bhandharkar, *Contribution to the Study of Ancient Hindu Music, Indian Antiquary,* XLI (1912), qui détermine la nature de la différence entre le gāndhāra-gr- et le ṣadja-gr-, sans résoudre la question pour le gāndhāra ancien.

122. Agrāhi : 3ᵉ p. d'aoriste moyen à sens passif.

124 cd. Une fois qu'une femme s'est mise en route (pour un rendez-vous galant), pourquoi la voiler (puisqu'elle a perdu toute retenue)?

127. Dans une circonstance où les honteux n'ont pas honte, Naravāhanadatta l'éhonté aurait honte d'avoir honte!

समर्थयति मय्येवं दत्तको ऽपि निरुत्तरः ।
अहो साहसमित्युक्त्वा तूष्णींभावमुपेयिवान् ॥ १२८ ॥
अहमप्यासनं त्यक्त्वा तिर्यक् पश्यति दत्तके ।
पार्श्वे गन्धर्वदत्ताया दत्तमासनमाश्रितः ॥ १२९ ॥
अथ कञ्चुकिनानीतां वीणां दृष्ट्वाहमुक्तवान् ।
अपरानीयतामार्य नैतां स्पृशति मादृशः ॥ १३० ॥
उदरं दृष्टमेतस्या लूतातन्तुनिरन्तरम् ।
जडतां गमिता येन पटुतन्त्रीपरंपरा ॥ १३१ ॥
स्मितदर्शितदन्ताग्रैरन्यतः स्मितपुष्टिभिः ।
मामालोक्य तथाभूतमुक्तं नागरकैरिति ॥ १३२ ॥
ब्राह्मणः पूज्यतामेष निर्लज्जाग्रपताकया ।
येन साहसमारब्धं स्वगुणाख्यापनोपमम् ॥ १३३ ॥
तन्त्रीकिणकठोराग्रा विशीर्णकरजाततः ।
करशाखाश्च नो याता न च संभावनेदृशी ॥ १३४ ॥
अयं तु कोमलाग्राभिस्तन्त्रीरङ्गुलिभिः स्पृशन् ।
कदा वादयिता वीणां वेदवेदाङ्गपारगः ॥ १३५ ॥
सर्वथायमभिप्रायो मयैतस्योपलक्षितः ।
प्रीतिमुत्पादयिष्यामि तावल्लोचनयोरिति ॥ १३६ ॥
यावदुत्सार्यते वीणा यावदानीयते ऽपरा ।
तावद्गन्धर्वदत्ताया रूपं पश्याम्यवारितः ॥ १३७ ॥
रथ्याचत्वरयात्रासु वत्स्यामि जनसंनिधौ ।
ईदृशी तादृशी दृष्टा रूपिणी युवतिर्मया ॥ १३८ ॥
लूतातन्तुततं चायं वीणाकर्परमाह यत् ।
किं तत्सत्यं नृपेत्येतद्दैवैर्विज्ञायतामिति ॥ १३९ ॥
उद्वेष्टिते च तत्तस्मिन्दृष्टं वेष्टनचर्मणि ।
तन्तुचक्रं भयोद्भ्रान्तलूतामण्डलसंकुलम् ॥ १४० ॥

128. tūṣṇībhāvam. — 129. tiryaka B. — 130. kañcukīnā- B; dṛṣṭvāmuktavān B. — 131. lūtāntaṃtunirantaraṃ B lūlātaṃtuniraṃlaraṃ *m;* paṭṭanetrī- *m;* paraṃparāṃ. — 132. dantāçrair *m;* -bhūtaṃmuktaṃvānāgarakair *m.* — 134. -kina-; visīrṇṇa- B; -ātatā *m.* — 135. aṅgulibhispṛçan B. — 136. mayaistasya. — 137. paçyāmavāritaḥ. — 138. dṛṣṭvā *m.* — 139. lūtāṃtaṃtu B; -tataç *m;* daivair B deve *m.*

अथ गन्धर्वदत्ताया जातमन्युं निरीक्ष्य माम् ।
घोषपुस्तोदरीनाथवल्लकीविधुराननम् ॥ १४१ ॥
अपरापि मया वीणा समास्फाल्य पटुक्वणा ।
वेमदूषिततन्त्रीका प्रथमेव विवर्जिता ॥ १४२ ॥
सानुदासस्ततो वीणां सुगन्धिकुसुमार्चिताम् ।
कच्छपाकारफलकामादाय स्वयमागतः ॥ १४३ ॥
तां च प्रदक्षिणीकृत्य सविकारतनूरुहः ।
गन्धर्वदत्तामिव तामददात्सुभगस्वनाम् ॥ १४४ ॥
मया तु धौतपादेन वीणां कृत्वा प्रदक्षिणाम् ।
अभुक्ताम्बरसंवीतं पीठपृष्ठमधिष्ठितम् ॥ १४५ ॥
मनाक् संस्पृष्टमात्रा च करशाखामुखैः स्वयम् ।
तन्त्रीबन्धा यथास्थानमसरद्धैवतादिकम् ॥ १४६ ॥
ततस्तन्त्रीषु गान्धारे जृम्भमाणासु मन्थरम् ।
गन्धर्वदत्तामवदं गीत संगीयतामिति ॥ १४७ ॥
सा प्रगल्भापि गान्धारमाकर्ण्यामरगोचरम् ।
तथा च धृष्टमादिष्टा बालाग्राशालीनतां गता ॥ १४८ ॥
तां च प्रवर्तयन् गीतां यथावगितमूकताम् ।
तदेव गीतकं दिव्यमहं मन्द्रमवादयम् ॥ १४९ ॥
इति तत्रास्त्रपावेतौ संदर्शितपथा यथा ।
लोकं पावयितुं पुण्या प्रावर्तत सरस्वती ॥ १५० ॥

143. svamāgataḥ B. — 146. yaṣā- *ou* yathā- B (*en surcharge*). — 147. jṛmbhamānāsu. — 148. ākarṇyamara- *m;* sālīnatāṅ B. — 149. tāçca *m;* pravarttayantītāṃ B -yaṃtītāṃ *m;* vivyam B. — 150. trayāsetau; sandarçitayathāyathā B.

142. Kvaṇa «son», bien attesté dans les lexiques; cf. kvaṇ-.

Samāsphālya : sam-ā-sphal- (causal); nouveau avec sam-ā-.

143 : Phalaka = table (du luth). Celui-ci a une table de forme convexe : il est réellement fait avec une carapace de tortue (XVIII, 571), ce qui le différencie sans doute des précédents. C'est le luth donné à Sānudāsa par Bharadvāja, celui qui est destiné au vainqueur présumé.

146. Naravāhanadatta n'a pas besoin de modifier l'accord; le luth, dont la première corde donne la note *dhaivata*, est accordé d'avance pour jouer dans le mode gāndhāra, comme il sied à un luth divin.

150. Sarasvatī se manifesta : c'est tout simplement une manière de dire que Gandharvadattā commença à chanter et Naravāhanadatta à l'accompagner. L'expression n'a pas d'autre valeur ici, pas plus sans doute que IV, 12.

वृत्तिर्निर्दक्षिणायामित्थंगीतं गीतकं मया ।
उपर्युपरि पाण्यैस्तैः पाणिभिर्योजितं मया ॥ १५१ ॥
आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।
तद्गीतमात्रविषयश्रोत्रमात्रजनस्तदा ॥ १५२ ॥
सभायां गाढमूर्छायां मृदु तद्गीतवादितम् ।
पटुभिर्दुन्दुभिध्वानैरभिभूतं विमानिनाम् ॥ १५३ ॥
पतितासु चरत्नासु दिवः कुसुमवृष्टिषु ।
कञ्चुकी चेतनाप्राप्तानभाषत सभासदः ॥ १५४ ॥
भो भो निर्मत्सराः सन्तः सत्यमाख्यात साधवः ।
गीतं यद्गयानेन किं तत्संवादितं न हि ॥ १५५ ॥
अथोन्नमितहस्तैस्तैः समस्तैस्तत्प्रमुखैः ।
धर्म्यंमुक्तार्पितालेप कन्यकां सम्मतामिति ॥ १५६ ॥
तिरस्कारिणिकां वीणा ततः कञ्चुकिनान्तरा ।
बहिष्कृता नागरका नाकिकास्त्रिदिवादिव ॥ १५७ ॥
निर्गच्छन्ति हतच्छायास्ते खण्डितमनोरथाः ।
स्वभ्यस्तगुणवैफल्यं गुणिनः कान्न तापयेत् ॥ १५८ ॥
सवीणादत्तको ऽहं तु श्रेष्ठिनाभ्यपरीक्षितः ।
परीक्ष्य बहुशो राज्ञा सचिवो गुणवानिव ॥ १५९ ॥
अभाषत च निर्गच्छत्स्वेषु नागरकर्षभः ।
यवीयानुक देवस्त्वमनागुणपराक्रमः ॥ १६० ॥
वयं गन्धर्वदत्ता च सानुदासश्च सानुगः ।
कृच्छ्रामापदमापन्ना लीलयैव त्वयोद्धृताः ॥ १६१ ॥
काश्मर्यः खदिराः शाकाश्चम्पकाश्च सवेतसः ।
आतोद्यकार्थमुत्खाताः प्ररोहन्तु यथा पुरा ॥ १६२ ॥

151. taṃgītam; pāṇyostaiḥ *m.* —152. -viṣaye *m.* — 154. kaṃcukīkaṃcukī *m;* cetatāprāmnān *m.* — 155. saṃbhāvitāmiti *m* (*cf.* 156 d). — 156 *om. m.* — 157. bahiskṛtā. — 158. nirgacchanhata- B. — 159. sreṣṭinā- B; -īkṣataḥ; bahuso B; sacive *m.* — 160. nirgacchanteṣu B; -kāmudevas *m.* — 161. kṛchāmāpadam B kṛchamāhyaṃdam *m;* -odvṛtāḥ *m.* — 162. kāsmaryaḥ B; khādirāḥ *m.*

151. Dakṣiṇa «habile» (en parlant de musique; cf. dakṣiṇā gāthakāḥ, *Kāç.* ad *Pāṇini*, I, 1, 34).

Pāṇya «louable» : non attesté dans les textes mais conforme à l'enseignement de *Pāṇini*, III, 1, 101.

153. Vimānināṃ : cf. III, 98.

157. Tiraskariṇikāṃ : cf. 81.

अभिरोपायि रचन्तां शिवाः संध्यामुपासताम् ।
कुमार्यः परिणीयन्तां प्रसूयन्तां कुलस्त्रियः ॥ १६३ ॥
परिव्राजकनिर्ग्रन्थभिक्षुपाशुपतादयः ।
गुरुपत्नीमिवंक्रान्तान् स्वसिद्धान्तानधीयताम् ॥ १६४ ॥
शान्तवीणोपसर्गत्वात्सकीरनगराः सुखम् ।
सचम्पामगधाश्चाङ्गाः स्वस्थाङ्गाः शेरतामिति ॥ १६५ ॥
ततो गृहपतिर्दीनः प्रार्थनाभङ्गशङ्कया ।
वीणादत्तकमालोक्य प्रावोचन्नीचकैस्तराम् ॥ १६६ ॥
प्रशस्तं दिनमद्यैव तेनायं पौरवार्जितः ।
श्वःश्वो गन्धर्वदत्तायाः वरः संस्क्रियतामिति ॥ १६७ ॥
अहं तु सामिलायो ऽपि दर्शितापीतधीरतः ।
अवोचं स्मितसंकीर्णमनास्थामन्थरां गिरम् ॥ १६८ ॥
द्विजो ऽहं मेदवैतासतुल्यामसकुलोद्भवः ।
परिणेतुं न मे युक्तामसवर्णामिमामिति ॥ १६९ ॥
अथोक्तं सानुदासेन विस्रब्धं परिणीयताम् ।
युष्माकं हि सवर्णैयमुत्कृष्टा वा भवेदिति ॥ १७० ॥
आसीच्च मम किं मत्तः किमुन्मत्तः किमार्जवः ।
अयं यस्मादसंबद्धमबुद्धिरिव भाषते ॥ १७१ ॥

165. sānta-; sakīrahnagarāḥ B sakīragarāḥ *m;* magadhāscāṅgāḥ (!) B magadhāḥsvāṅgāḥ *m;* seratām B. — 166. pravocan *m.* — 167. dina· · ·tenā- *m;* saṃkriyatām. — 168. smṛta- *m;* -manthirāṅgiraṃ (raṅgi *peu lisible*) B -manthirāṃgaṇe *m.* — 169. pariṇetuṃ *en surcharge dans* B, *d'une main postérieure; la suite à peu près illisible jusqu'à* varṇṇām, *pour cause de vétusté du ms.* pariṇetuṃ · · · · · · · varṇām *m;* igāmiti *m.* — 170. visrabdhaṃ; yusmākaṃ B; saveroyim *m.* — 171. ayaṃ *jusqu'à* buddhir *à peu près illisible dans* B. — 172. brāhmaṇādayaṃ *m.*

165. Les différents bois doivent correspondre à différentes espèces d'instruments : ainsi le bambou ne saurait servir qu'à fabriquer la kiṃnarī-vīṇā, instrument à une ou deux cordes à l'usage des campagnards.

165. Sānta- et çānta- sont également possibles.

Je ne sais que faire de kīra. Le terme désigne d'ordinaire le Cachemire : ce ne peut être cela ici. Il me paraît difficile d'entendre kīra «perroquet». La réunion de Campā et du Magadha dans le même composé, au pāda suivant, est aussi un peu bizarre.

167. Praçastam : cf. 78.

यद्यहं चेयं च यवसा ब्राह्मण्याविति निश्चयः ।
ततो मत्कथयुत्कृष्टा ब्राह्मणी ब्राह्मणादियम् ॥ १७२ ॥
अथेमां ब्राह्मणीमेव मन्यते यदियं तु माम् ।
तथा सति कथाप्येषा क्रियमाणा विरुध्यते ॥ १७३ ॥
किं तु संभाव्यते नायमसंबद्धं प्रभाषितुम् ।
येन धर्मार्थशास्त्रार्थपुरुधीरिव भाष्यते ॥ १७४ ॥
अग्रजो ऽवरजां भार्यां स्वीकुर्वन्न प्रदुष्यति ।
त च स्वा चैव नृपतेरित्युक्तं मनुना यतः ॥ १७५ ॥
प्रत्याख्यानं च नितरामियं नार्हति निन्दितम् ।
यस्मादखण्डिताज्ञेन दापिता गुरुणैव मे ॥ १७६ ॥
यदहं ग्राहितस्तेन विज्ञानमतिमानुषम् ।
दापिता येन तेनैव तेन तेनैव दापिता ॥ १७७ ॥
न चावश्यपरिग्राह्या कुमारी चिरमर्हति ।
साभिलाषा विशेषेण प्रत्याख्यानकदर्थनाम् ॥ १७८ ॥
तस्मादहं समानेन निर्वन्धेनेति निश्चितम् ।
अर्थितां सानुदासस्य तथेति सममानयन् ॥ १७९ ॥
अथ वैश्रवणस्येव सूनोराखण्डलात्मजः ।
करं गन्धर्वदत्तायाः ससंस्कारमुपाददे ॥ १८० ॥

173. saṃti *m;* -āpyeṣā *peu lisible dans* B; kathā · · · kri- *m;* kriyamānā. — 174. dhamāthaçā.rtha- (*presque illisible*) B. — 175. agrajocarajāṃ B agrajovarajām *m.* — 176. dāpitā *ex* vāpitā B; gurunaiva B. — 177. yadayaṃgrāhiṇas *m.* — 178. -āvasya- B; sābhilāsāviçeṣena B; pratyākhyāmna (*? très peu lisible*) B -khyānaṃ *m.* — 179. sāṃvudāsasya *m.* — 180. vaiçravanasyeva B; sūratokhaṇḍalā- *m.*

173. Kathā signifie «l'analyse du comment», l'examen logique des termes dont il s'est servi. Ce qu'il reproche au discours de Sānudāsa, dans la première hypothèse, est clair (172) mais ce qu'il lui reproche dans la seconde l'est moins : c'est sans doute que Sānudāsa n'aurait pas dû dire : «elle est votre égale»; elle peut être soit égale soit supérieure à Naravāhanadatta mais non l'un ou l'autre indifféremment (Pour le sens de kathā, cf. X, 37).

175. Cf. *Manu*, III, 13c : te ca svā caiva rājñaḥ : un roi peut prendre une femme dans sa caste et dans les deux castes inférieures (le brâhmane dans les quatre castes). Mais cette licence n'est tolérée que pour la seconde épouse (*ibid.*, 12). Le cas s'applique à Naravāhanadatta sans que Sānudāsa le sache.

Agraja, comme agrajanman, désigne le brâhmane. Ici : «un homme de la caste la plus noble» par opposition à avaraja «de la caste la plus basse».

180. Sūnor : féminin à remarquer.

मन्दं घाट्टतलेन तालमनया यत्नुद्रुवत्याचिरं
गीतं भायमि विस्फुरत्पुलकितं तारैः सुभुग्नभ्रुवा ।
तेनैव प्रतनूकृतानपहरन्नस्याः क्रमेण त्रपां
निर्वाणात्महतान्तरेण सुभगं संसारमध्यासिषम् ॥ १८१ ॥

इति बृहत्कथायां श्लोकसंग्रहे गन्धर्वदत्ताविवाहः ॥ १७ ॥

181. tāre; subhagna- *m;* pratanūkṛtānayaharann *m;* trayāṃ; nirvāṇātmahatā- B nirvāṇātmakatā- *m;* sutasaṃsasāram *m.*

iti... çlokasaṃgrahe *om.* B.

181. Mètre : çārdūlavikrīḍita.